**सीता** । होदु अज्जउत्त होदु एहि पेक्खह्म दाव दे चरिदं (१)

(उत्थाय परिक्रामतः)

**लक्ष्मणः** । इदं तावदालिख्यम् ।

**सीता** । (निर्वर्ण्य) के एदे उवरि णिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तं । (२)

(क) **लक्ष्मणः** । एतानि देवि सरहस्यजृम्भकास्त्राणि यानि भगवतः कृशाश्वात् कौशिकमृषिमुपसंक्रांतानि तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

**रामः** । वन्दस्व देवि दिव्यास्त्राणि ।

(ख) **ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि ।**
**एतान्यपश्यन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥१५॥**

**सीता** । णमो णमो एदाणं । (३)

---

(१) भवत्वार्यपुत्र भवतु एहि प्रेक्षावहे तावत् ते चरितम्
(२) क एते उपरि निरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्
(३) नमोनम एतेभ्यः ।

---

यित्वेन कष्टदो लोकः । अनुरञ्जनीयः आराधयितुमेव योग्यः । तत् मे मत्संबन्धि मदनुष्ठितं अशिवं अग्निशुद्ध्यादि । दुरुक्तं अनुवादमुखेनापि । ते तव । वक्तुं अक्षमं । सर्वथा शुद्धायाः सीतायाः लोकापवादभीत्या मयानुष्ठितमपि त्वया वक्तुमयोग्यमिति भावः । अर्थान्तरमाह—सुरभिणः सुगन्धेः कुसुमस्य देवादेर्मूर्ध्नि स्थितिः नैसर्गिकी स्वाभाविकी सिद्धा । चरणैः अवताडनानि न सिद्धानि दृष्टान्तालङ्कारः । लोकानुरञ्जनाय पत्या मया सर्वतोमुखप्रभुतया कर्तुमयोग्यमपि अग्निशुद्ध्यादि अनुष्ठितं । त्वया पुत्रस्थानीयेन तदनुवादोऽप्यनुचितः इति भावः ॥ १४ ॥

(क) सरहस्येति । रहस्यं प्रयोगसंहारमन्त्रसमूहः तेन सहितानि जृम्भकनामानि अस्त्राणि । कृशाश्वादिति । 'आख्यातोपयोगे' इत्यपादानत्वं । विश्वामित्रं । 'मित्रे चर्षौ' इति दीर्घः । उपसंक्रान्तानि सम्प्राप्तानि ॥

(ख) **ब्रह्मादय इति** । ब्रह्मादयः ऋषयः । ब्रह्महिताय ब्रह्म वेदाः ब्राह्मणा वा तेषां हिताय । परःसहस्राः सहस्रात्पराः परःसहस्राः । पारस्करादिगणे पाठात्सुट् ।

(क) रामः । सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता । अणुगिहीदह्मि । (१)

लक्ष्मणः । एष मिथिलावृत्तान्तः ।

(ख) सीता । अम्महे दलण्णवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलेण देहसोहग्गेण विह्मअत्थिमिदतातदीसंतसोम्मसुन्दरसिरी अणादरखुडिदसंकरसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो । (२)

लक्ष्मणः । आर्ये पश्य पश्य ।

(ग) सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः । दृष्टमेतत् ।

---

(१) अनुगृहीताऽस्मि ।

(२) अम्हहे दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशंकरशरासनः शिखण्डमुग्धमुखमंडल आर्यपुत्र आलिखितः ।

---

राजदन्तादित्वात् परनिपातः–मयूरव्यंसकादित्वात्समासः । शरदः वर्षाणि । अत्यन्तसंयोगे द्वितीया । तपांसि तप्त्वा कृत्वा एतानि जृम्भकाख्यानि अस्त्राणि स्वानि स्वीयान्येव तेजांसि तपोमयानि अपश्यन् । तपांस्येव अस्त्ररूपेण परिणतानि इत्यर्थः । एतेन अस्त्राणां अतिसामर्थ्यवत्ता सूचिता उपजातिवृत्तम् ॥ १५ ॥

(क) उपस्थास्यन्ति प्राप्स्यन्ति ॥

(ख) अम्महे इति अव्ययं विस्मये भाषायां । दलत् विकसितं नवं नूतनं नीलं उत्पलं कैरवं तदिव श्यामलं श्यामं स्निग्धं स्नेहविषयं मसृणं कोमलं शोभमानमांसलं पुष्टं । एतादृशेन देहस्य सौभाग्येन सुभगत्वेन । सुभगशब्दात्ष्यञि 'हृद्भग'--इति पूर्वोत्तरपदवृद्धिः । विस्मयेन स्तिमितः निश्चलः आर्द्रहृदयः वा यः तातः दशरथः तेनपरिदृश्यमाना सौम्या सुन्दरा श्रीर्यस्य । तथा अनादरेण खण्डितं द्विधाकृतं शङ्करस्य शरासनं येन । तथा शिखण्डेन काकपक्षेण । 'काकपक्षः शिखण्डकः' इत्यमरः । मुग्धं सुन्दरं मुखमण्डलं यस्य ॥

(ग) सम्बंधिन इति । संबन्धिनः । विवाहजनितः संबन्धो विद्यते येषां तान् ॥१६॥

(क) **जनकानां रघूणां च सम्बन्धः कस्य न प्रियः ।**
**यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥**

(ख) **सीता ।** एदे क्खु तक्कालकिदगोदाणमंगला चत्तारो भादरो विआहदीक्खिदा तुह्मे । आम्मो जाणामि तस्सिं ज्जेव पदेसे तस्सिं ज्जेव काले वत्तामि । (१)

(ग) **रामः । समयः स वर्तत इवैष यत्र मां**
**समनन्दयत् सुमुखि गौतमार्पितः ।**
**अयमुद्गृहीतकमनीयकङ्कण-**
**स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥**

**लक्ष्मणः** । इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः ।

**सीता** । वच्छ इअं पि अवरा का । (२)

---

(१) एते खलु तत्कालकृतगोदानमंगलाश्चत्वारो भ्रातरो विवाह-दीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते ।

(२) वत्स इयमप्यपरा का ।

---

(क) **जनकानामिति** । कुशिकस्य राजर्षेर्नन्दनो विश्वामित्रः । पूज्यत्वात्तस्मिन्दातृत्वं प्रतिग्रहीतृत्वञ्च उपचरितम् ॥ १७ ॥

(ख) तत्कालकृतगोदानमंगलाः तस्मिन्काले कृतं गोदानं केशान्ताख्यं कर्म तदेव मंगलं येषां ते गावो लोमानि केशाः दीयन्ते खण्ड्यन्ते यत्रेति गोदानं केशान्ताख्यं कर्म । तदुक्तं मनुना 'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः' इति । 'गौर्नाऽदित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री स्यात्तु दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्रांऽबुरश्मिदृक्बाणलोमसु ।' इति केशवः । इदञ्च 'अथास्य गोदानविधेरनन्तरं' इति रघुश्लोकव्याख्याने मल्लिनाथेन अभिहितं । जानामि स्मरामि । सामान्यस्यापि विशेषपरता ॥

(ग) **समय इति** । गौतमार्पितः गौतमेन शतानन्देन अर्पितः मम करे दत्तः । उदगृहीतं धृतं कमनीयं कङ्कणं हस्तसूत्रं येन तथा । 'कङ्कणं करभूषायां हस्तसूत्रे च शेखरे' इति

(क) लक्ष्मणः । (सलज्जस्मितमपवार्य) । अये ऊर्मिलां पृच्छत्यार्या । भवत्वन्यतः सञ्चरामि । (प्रकाशम्) आर्ये दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान् भार्गवः ।

सीता । (ससंभ्रमम्) भीद ह्मि । (१)

रामः । ऋषे नमस्ते ।

(ख) लक्ष्मणः । आर्ये पश्य पश्य । अयमसावार्येण । (इत्यर्धोक्ते)

(ग) रामः । (साक्षेपम्) अयि बहुतरं द्रष्टव्यमस्ति । अन्यतो दर्शय ।

(घ) सीता । (सस्नेहबहुमानं निर्वर्ण्य) सुठ्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण । (२)

लक्ष्मणः । एते वयमयोध्यां प्राप्ताः ।

(ङ) रामः । (सास्रम्) स्मरामि हन्त स्मरामि ।

---

(१) भीताऽस्मि ।

(२) सुष्ठु शोभसे आर्यपुत्र एतेन विनयमाहात्म्येन ।

---

हेमः । तव मूर्तिमान् साकारः महोत्सव इव करः मां यत्र काले समनन्दयत् । सः समयः वर्तत इति । भाविकालङ्कारः । मञ्जुभाषिणी वृत्तं । 'सजसाजगौ भवति मञ्जुभाषिणी' इति तल्लक्षणात् ॥ १८ ॥

(क) स्वस्त्रीविषयप्रश्नाल्लज्जा स्मितञ्च । अपवार्य । 'रहस्यं कथ्यतेन्यस्य परावृत्यापवारितम्' इति । प्रकाशं 'सर्वश्राव्यं प्रकाशंस्यात्' ॥

(ख) अर्धोक्ते । पराजित इति शेषः ॥

(ग) साक्षेपं । द्विजपराभवस्याऽश्लीलत्वात्स्ववीर्यस्य स्वयं श्रोतुमयोग्यत्वाच्चाक्षेपः एतेन नायकस्य धीरोदात्तता ॥

(घ) सस्नेहेति । रामे धीरोदात्ततां दृष्ट्वा स्नेहः । स्वकर्तृकद्विजपरिभवरूपकर्मणः दर्शनपरिवर्जनाच्च बहुमानः । विनयमाहात्म्येन विनयस्य पूर्वोक्तस्य माहात्म्येन अतिशयेन । महात्मनो भार्गवस्य पराजयरूपं लाघवं स्वस्य विजयरूपं गौरवं च द्रष्टुमशक्तत्वाद्रामस्य महात्म्यं विनयवत्वंच सूच्यते ॥

(ङ) सास्रं । स्वर्गतपितृस्मरणादश्रुपातः ॥

(क) जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गता: ॥ १९ ॥

इयमपि तदा जानकी

(ख) प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमंगकैः ॥ २० ॥

(ग) लक्ष्मणः । एषा मन्थरा ।

(घ) रामः । (अनुत्तरमन्यतो गत्वा) देवि वैदेहि

---

(क) **जीवत्स्वति** । तातपादेषु । पादशब्दः पूज्यत्वे । बहुवचनमादरे । दशरथे शोकाऽवेशेन पितृनामाऽग्रहणं । गुरुनामग्रहणनिषेधाच्च । दारपरिग्रहे दाराणां परिग्रहे नवे नूतने सति । मातृभिः कौसल्यादिभिः । चिन्त्यमानानां एवमेवमेषां सुखोदर्कः कालो भविष्यति इति चिन्ताविषयीक्रियमाणानां नः अस्माकं । ते वाचामगोचराः दिवसाः गताः । कथमपि ते पुनः न लप्स्यन्त इति भावः ॥ १९ ॥

(ख) **प्रतनु इति** । तदा इयं जानकी मधुरैः नेत्राऽनन्दजनकैः अंगकैः । अल्पार्थे कन् । अल्पैस्तनुतरैः अंगैः । मे अम्बानां मातृणां कुतूहलं कौतुकं अकृत कृतवती । लुङि प्रथमपुरुषैकवचनम् । कीदृशैः ललितललितैः अतिशयेन ललितैः । तथा ज्योत्स्नाप्रायैः जोत्स्ना चन्द्रिका तत्तुल्यैः आनन्दकरत्वात् । तथा अकृत्रिमविभ्रमैः अकृत्रिमाः स्वाभाविकाः अनुत्पन्नयौवनत्वात् विभ्रमाः विलासाः येषां तैः । कीदृशी जानकी । दशनमुकुलैः दशनाः दन्ताः मुकुलानीव कुड्मलानीव तैः मुग्धाऽलोकं मुग्धः मनोहरः आलोको दर्शनं यस्य तादृशं मुखं दधती । 'नाऽभ्यस्ताच्छतुः' इति न नुम् । कीदृशं मुखं । प्रतनुभिः सूक्ष्मैः विरलैः अनिबिडैः प्रान्तोन्मी० प्रान्ते कपोलप्रान्ते उन्मीलन्तो विकसन्तः मनोहराः सुन्दराः ये कुन्तलाः अलकाः तैरुपलक्षितम् । हरिणीवृत्तम् । 'रसयुगहयैर्न्सौम्रौस्लौ गो यदा हरिणी तदा' इति तल्लक्षणात् ॥ २० ॥

(ग) मन्थरा कैकेयी दासी ॥

(घ) अनुत्तरं । तया राजविघ्नकारणात् उत्तराभावः । गत्वा दृष्टिं दत्वा ॥

(क) इंगुदीपादपः सोऽयं शृंगबेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत् समागमः ॥ २१ ॥

(ख) लक्ष्मणः । (विहस्य स्वगतम्) अये मध्यमाम्बावृत्तमन्तरितमार्येण ।

(ग) सीता । अह्मो एसो जटासञ्जमणवुत्तन्तो । (१)
लक्ष्मणः ।

(घ) पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिः कृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकं व्रतम् ॥ २२ ॥

(ङ) सीता । एसा पसण्णपुण्णसलिला भअवदी भाईरथी । (२)
रामः । देवि रघुकुलदेवते नमस्ते ।

(च) तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात् प्लुष्टान् पितुः प्रपितामहान् ।
अगणिततनूपातं तप्त्वा तपांसि भगीरथो-
भगवति तव स्पृष्टानद्भिश्चिरादुददीधरत् ॥ २३ ॥

---

(१) अह्मो एष जटासंयमनवृत्तान्तः ।
(२) एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

---

(क) इंगुदीति । शृंगबेरपुरे गुहस्य नगरे । सामीप्ये सप्तमी । निषादपतिना गुहेन॥२१॥
(ख) विहस्य मध्यमं हासं कृत्वा । मन्थरावृत्तान्तदर्शनपरिहारात् । मध्यमाऽम्बा कैकेयी वृत्तं वृत्तान्तः । अन्तरितं व्यवहितं अप्रियतया त्यक्तं । वृत्तान्तमिति पाठस्तु असंगतः तस्य पुम्स्त्वात् ॥
(ग) अह्मो विस्मये । संय्यमनं बन्धनं महाराजस्याप्येतत्सम्पन्नमिति विस्मयः ॥
(घ) पुत्रेति । पुत्रे संक्रान्ता प्राप्ता लक्ष्मीर्येषां । 'उरःप्रभृतिभ्यः कप्' । 'न कपि' इति ह्रस्वनिषेधः । वृद्धाश्च ते इक्ष्वाकवश्च इक्ष्वाकुवंशप्रभवा राजानः तैः । यद्व्रतं कृतं । तत्पुण्यं आरण्यकं व्रतं बाल्ये आर्येण धृतम् ॥ २२ ॥
(ङ) प्रसन्नं पुण्यञ्च सलिलं यस्यास्ताम् ॥
(च) तुरगेति । हे भगवति । भगीरथो नाम राजा तुरगस्य अश्वमेधीयाऽश्वस्य

(क) सा त्वमेव स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भव ।

(ख) **लक्ष्मणः** । अयमसौ भरद्वाजाऽऽवेदिताश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटवटः श्यामो नाम ।

**सीता** । सुमरेदि वा एदं पदेसं अज्जउत्तो । (१)

**रामः** । अयि कथं विस्मर्यते ।

(ग) **अलसलुलितमुग्धान्यध्वसञ्जातखेदा-**
**दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।**
**परिमृदितमृणालीदुर्बलान्यंगकानि**
**त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥**

---

(१) स्मरति वैतं प्रदेशमार्यपुत्रः ।

---

विचये अन्वेषणे व्यग्रान् व्याकुलान् । 'यावत्तुरगसन्दर्शस्तावत्खनत मेदिनीं' इति सगराऽऽज्ञया उर्वीभिदः उर्वीं महीं भिन्दन्ति तान् । अमर्षात् क्रोधात् । कपिलमहामुनेः महसा तेजसा प्लुष्टान् दग्धान् । 'प्लुष दाहे' क्तः । अगणितः तनूपातः शरीरध्वंसः यस्मिन्कर्मणीति । क्रियाविशेषणमेतत् । तपांसि तप्त्वा तव अद्भिः जलैः । 'अपांभि' इति तकारः । स्पृष्टान् अभिषिक्तान् । पितुः दिलीपस्य प्रपितामहान् षष्टिसहस्रान् । उददीधरत् उद्धृतवान् । धरतेर्णिजन्तस्य लुङि रूपं । अस्मत्कुलपूर्वजेन भगीरथेनाऽनीततयाऽस्मत्पूर्वजोद्धारकतयाचाऽस्मत्कुलदेवता त्वामिति भावः ॥ २३ ॥

(क) शिवाऽनुध्यानपरा कल्याणचिन्तनतत्परा ॥

(ख) अयमिति । आवेदितः निवेदितः चित्रकूटयायिनि चित्रकूटपर्वतगामिनि वर्त्मनि मार्गे । कालिन्दी यमुना ॥

(ग) **अलसेति** । यत्र श्यामवटे तत्तले । अध्वना मार्गक्रमणेन सञ्जातात् खेदात् श्रमात् । अलसानि कार्याऽक्षमाणि लुलितानि शिथिलानि तथाऽपि मुग्धानि मनोहराणि । ततः मया अशिथिलैः गाढैः परिरम्भैः । बहुवचनेन पौनःपुन्यं व्यज्यते । दत्तानि संवाहनानि मर्दनानि येषां तानि । मार्गश्रमक्रान्तानां संवाहनमुचितमेवेति भावः । ततः तस्याः स्वाधीनपतिकात्वं । परितो मृदिता क्षुण्णा या मृणाली अपचयविवक्षया स्त्रीत्वं । 'स्त्री स्यात्काचिन्मृणाल्याऽदिर्विवक्षाऽपचये यदि' इत्यमरः । सैव दुर्बलानि अंगकानि अनुकम्प्यानि अंगानि । त्वं मम उरसि कृत्वा अत्याधाय उपरि स्थापयित्वा । निद्रां अवाप्ता प्राप्ता । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगि लोकैः । अष्टभिः' सप्तभिर्यतिः ॥ २४ ॥

(क) लक्ष्मणः। एष विन्ध्याटवीमुखे विराधसंरोधः।

(ख) सीता। अलं दाव एदिणा। पेक्खामि दाव अज्जउत्तहत्थधरिदतालवेंटादवत्तनिवारिदादवं अत्तणो दक्खिणारण्णप्पवेशारम्भं। (१)

रामः।

(ग) एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि।
येष्वातिथेयपरमाः शमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

(घ) लक्ष्मणः। अविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणः।

---

(१) अलं तावदेतेन। प्रेक्षे तावदार्यपुत्रहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम्।

---

(क) मुखे प्रवेशद्वारे। विराधसंरोधः विराधाख्यराक्षसकर्तृकः संरोधः अवरोधः। अस्माकमिति शेषः॥

(ख) आर्यपुत्रेण हस्ते धृतं तालवृन्तमेव व्यजनमेव आतपत्रं यस्मिन्। 'व्यजनं तालवृन्तकं' इत्यमरः॥

**एतानीति**। गिरिनिर्झरिणीतटेषु पर्वतसम्बन्धिनदीतटेषु। वैखानसैः वानप्रस्थैः आश्रिताः आवासत्वेन गृहीताः तरवो वृक्षा येषु तानि। एतानि तानि तपोवनानि सन्ति। येषु तपोवनेषु। आतिथेयपरमाः अतिथिषु साधु आतिथेयं 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । तत्परमं आवश्यकं कर्म येषां ते। नीवाराणां तृणधान्यानां मुष्टिः पचनं पाको येषां ते। शमिनः शमवन्तः गृहिणः गृहस्थाः गृहाणि भजन्ते सेवन्ते। वसन्ततिलकावृत्तम् ॥ २५ ॥

(घ) अविरलाः निरन्तराः ये अनोकहाः वृक्षाः तेषां निवहः समूहः तेन निरन्तरं घनं स्निग्धं नीलञ्च यत्परिसरारण्यं पर्यन्तभुवः वनं तस्मिन्परिणद्धा निबद्धा विस्तृता या गोदावरी तया मुखराः सशब्दाः कन्दराः दर्यो यस्य सः। अभितः सर्वतः स्यन्द-

(क) रामः । स्मरसि सुतनु तस्मिन् पर्वते लक्ष्मणेन
प्रतिविहितसपर्यास्वस्थयोस्तान्यहानि ।
स्मरसि सरसतीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्ते ह्यावयोर्वर्तनानि ॥ २६ ॥

अपिच

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

---

मानैः प्रस्रवद्भिः 'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' इति षत्वं । मेघैः मेदुरितः सान्द्रीकृतः नीलिमा नैल्यं यस्य । जनस्थानस्य नासिकाख्यक्षेत्रस्य । 'त्रेतायां तु त्रिकण्टकं । द्वापरे तु जनस्थानं कलौ नासिकमुच्यते' ॥ मध्यमः मध्ये भवः मध्यमः । 'मध्यान्मः' इति मप्रत्ययः ॥

(क) **स्मरसीति** । हे सुतनु शोभना तनूर्यस्याः तत्सम्बुद्धौ । 'अम्बार्थनद्योर्ह्रस्वः' । अतो न गुणः । तस्मिन् पर्वते लक्ष्मणेन प्रतिविहितया पुनःपुनःकृतया सपर्यया पूजया 'पूजा नमस्याऽपचितिः सपर्याऽर्चाऽर्हणाः समाः' इत्यमरः । स्वस्थयोः आवयोः तानि अलौकिकसुखावहानि अहानि दिनानि स्मरसि । तत्र पर्वते सरसतीरां सरसं जलद्रवसहितं 'गुणे रागे द्रवे रसः' इत्यमरः । तीरं यस्यास्तां गोदावरीं वा । वा शब्दः समुच्चये । तस्याः गोदावर्याः उपान्ते समीपप्रान्ते आवयोः वर्तनानि च । चः अप्यर्थे । स्वच्छन्दसञ्चारान् स्मरसि ॥ २६ ॥

(ख) **किमपीति** । किमपि अनिर्वचनीयं असम्बद्धं किमपि वाक्यजातं मन्दंमन्दं अतीव मन्दं अन्यैरश्राव्यं । आसत्तियोगात् अतिसान्निध्यवशात् । अविरलितौ उभयोः परस्परसंपृक्तौ कपोलौ यस्मिन्कर्मणि । अक्रमेण पौर्वापर्याऽभावेन जल्पतोः वाक्यानि वदतोः । अभेदे तृतीया । अशिथिलः अतिदृढः परिरम्भः आलिंगनं तत्र व्यापृतः सव्यापारः एकैकः दोः बाहुः ययोस्तयोः । 'पद्दन्'—इति सूत्रेण दोःशब्दस्य दोषन्नादेशः । आवयोः अविदिताः आनन्दनिमग्नमनस्त्वेन अज्ञाताः गताः यामाः यस्यास्सा । रात्रिरेव व्यरंसीत् विरराम । अक्रमेण जल्पनन्तु न अवसानं प्रापेतिभावः । विपूर्वाद्रमेर्लुङि 'व्याङ् परिभ्यो रमः' इति परस्मैपदं । अत्र सम्भोगः शृंगारो रसः । असंलक्ष्ये क्रमव्यंग्यो ध्वनिः । अत्र अतिप्रत्यासन्नता, भणितं, परिरम्भः, यामविस्मृतिः, अविरामश्च तैः पुष्टः रत्याख्यस्स्थायिभावः शृंगारो रसो वर्णितः ॥ २७ ॥

लक्ष्मणः । एषा पञ्चवट्यां शूर्पणखा ।

(क) सीता । हा अज्जउत्त एत्तिअं ज्जेव्व दसणं । (१)

(ख) रामः । अयि विप्रयोगत्रस्ते चित्रमेतत् ।

सीता । जधा तधा होदु दुज्जणो असुहं उप्पादेदि । (२)

(ग) रामः । हन्त वर्तमान इव जनस्थानवृत्तान्तः प्रतिभाति ।

लक्ष्मणः ।

(घ) अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथाक्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

---

(१) हा आर्यपुत्रैतावदेव दर्शनम् ।
(२) यथा तथा भवतु दुर्जनोऽसुखमुत्पादयति ।

---

(क) एतावदेव दर्शनं । ते इति शेषः । इतः परं रावणेन अपहारात ते दर्शनं नास्तीत्यर्थः । यद्वा इतः परं स्वस्या रावणेन कृताऽपहारायाः विरहशोकसागरे निमग्नस्य रामस्य दर्शनेन अतिकोमलहृदयायाः परदुःखदर्शनेन दुःखस्य सम्भाव्यमानत्वादिति । किं वा शूर्पणखीं दृष्ट्वा पुनः स्वाऽपहाराऽशङ्कया तथोक्तिः ॥

(ख) एवञ्च चित्रमपि साक्षादिव पश्यन्त्याः सीतायाः विस्मृतिः सञ्जाता । तामपनयति रामः । अयीति । वियोगत्रस्ते विरहशङ्किनि ॥

(ग) हन्त इति खेदे ॥

(घ) अथेति । पापैः रक्षोभिः कनकहरिणो सुवर्णमृगरूपो मारीचः तदेव छद्म छलं तस्य विधिना अनुष्ठानेन सुवर्णमृगरूपेण मारीचेन रामं वञ्चयित्वा तथा वक्तुमप्ययोग्यं वृत्तं सम्पादितं । भावे क्तः । यथाक्षालितमपि अभिमुखयादिना सम्यक्प्रतिकृतमपि व्यथयति । किं पुनः अप्रतिकृतं व्यथयिष्यति इति वक्तव्यं । शून्ये सीतारहिते । अत एव सर्वथाऽपि शून्ये । विकलैः वैकल्यपूर्णैः अत एव करुणैः शोकोद्दीपकैः आर्यचरितैः आर्यस्य आचरणैः ग्रावाऽपि । पाषाणोऽचेतनोऽपि रोदिति । सचेतनानान्तु का कथा । वज्रस्य अतिकठिनतया भेदायोग्यस्य वज्राख्यस्य शस्त्रस्य । हृदयं हन्ति द्विधाभवति । किमु मृदुलस्य मनिसस्य । एवञ्च विप्रलम्भे भवभूति-

(क) **सीता ।** (साक्षमात्मगतम्) अयि देव रहुकुलानन्द एवं मम कारणादो कलिदोसि । (१)

(ख) **लक्ष्मणः ।** (रामं निर्वर्ण्य साकूतम्) आर्य किमेतत्

(ग) अयं ते बाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदयः ॥ २९ ॥

**रामः ।** वत्स

---

(१) अयि देव रघुकुलानन्द एवं मम कारणात् क्लिष्टोसि ।

---

वर्णितेन रामकृतशोकेन ग्रावसदृशानां कठिनहृदयानां रसानभिज्ञानामपि शोकोद्दीपकता कविनैपुण्यप्रकाशिका व्यज्यते । अत एव उक्तं गोवर्धनेन । 'भवभूतेः सम्बन्धाद्भूधरभूरेव भारती भाति । एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा' ॥ विकलकरणैरिति पाठे विकलानि करणानि इन्द्रियाणि येषु इत्यर्थः । शोकाऽऽवेगादिति भावः । शिखरिणी वृत्तं । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' । यमनसभा गणाः लघुः गुरुश्च षड्भिः एकादशभिः यतिः ॥ २८ ॥

(क) आत्मगतं । स्वगतं । 'सर्वप्रकाशंश्रव्यंस्यादश्रव्यं स्वगतं मतं' इ[ति] दशरूपके ॥

[ ॥

(क) तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

(ख) सीता । हद्धी हद्धी अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि । (१)

(ग) लक्ष्मणः । (स्वगतम्) भवत्वन्यतः क्षिपामि (चित्रं विलोक्य प्रकाशम्) तदेतन्मन्वन्तरपुराणगृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

(घ) सीता । हा तात णिव्वुढो दे अवच्च सिणेहो । (२)

---

(१) हा धिक् हा धिक् अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं प्रेक्षे ।

(२) हा तात निर्व्यूढस्तेऽपत्यस्नेहः ।

---

(क) तत्कालमिति । प्रियजनस्य सीतारूपस्य विप्रयोगात् विरहात् जन्म यस्य सः । तीव्रोऽपि अतिदुस्सहोऽपि दुःखाग्निः । प्रतिकृतेः प्रतीकारस्य 'वैरशुद्धिः प्रतीकार' इत्यमरः । रावणादिवधरूपस्य वाञ्छया । तत्कालं तस्मिन्काले । विसोढः । अत्यन्तसंयोगे द्वितीया । दुःखाग्निः विरहाग्निः । मनसि । पुनः वाक्यालङ्कारे । विपच्यमानः बहुकालपर्यन्तं पाकमुपगच्छन् । नतु पक्कीभूयोपशमं गच्छन् हृदः हृदयस्य मर्मणि मर्मदेशे रूढो व्रण इव । वेदनां यातनां । करोति उत्पादयति । प्रहर्षणीवृत्तं । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयं' । मनभना गणाः गुरुः त्रिभिः दशभिर्यतिः ॥ ३० ॥

(ख) हद्धी हद्धी 'प्राकृते हाधिगित्यर्थे हद्धी वीप्सापदान्वितं' इति सागरः । अतिभूमिगतेन अत्यारूढेन रणरणकेन । 'रणरणको वियोगतरुः' इति मालतीमाधवटीकायां जगद्धरः । 'औत्सुक्यं रणरणकः स्मृतः' इति हलायुधः ॥

(ग) मन्वन्तरपुराणगृध्रराजस्य मन्वन्तरेण पुराणः वैवस्वतमनूत्पत्तिसमकालमुत्पन्नः । 'मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः' इत्यमरः । गृध्राणां राज्ञः तत्रभवतः पूज्यस्य जटायुषः । चरित्रविक्रमयोः उदाहरणं चित्रफलके विन्यासः ॥

(घ) ते तव । कर्तरिषष्ठी । अपत्ये बाले कर्तव्यः स्नेहः निर्व्यूढः परां काष्ठां प्रापितः । प्राणत्यागेनाऽपि तत्करणात् ॥

(क) **रामः** । हा तात काश्यप शकुन्तराज क्व पुनस्त्वादृशस्य महतस्तीर्थस्य साधोः सम्भवः ।

(ख) **लक्ष्मणः** । अयमसौ जनस्थानपश्चिमश्चित्रकुञ्जवान् नाम दनुकबन्धाधिष्ठितो दण्डकारण्यभागः। तदिदमृष्यमूकपर्वते मतंगस्याश्रमपदम्।
240 इयं च श्रमणा नाम सिद्धशबरी । तदेतत् पम्पाभिधानं सरः ।

(ग) **सीता** । एत्थ किल अज्जउत्तेण विच्छड्डितामरिसधीरत्तणं पमुक्तकण्ठं रुदिअं आसि । (१)

रामः । देवि रमणीयमेतत् सरः

(घ) **एतस्मिन् मदकलमल्लिकाक्षपक्ष-**
542 **व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।**
**बाष्पाम्भः परिपतनोद्गमान्तराले**
**संदृष्टाः कुवलयिनो भुवो विभागाः ॥ ३१ ॥**

---

(१) अत्र किल आर्यपुत्रेण विसृष्टामर्षधीरत्वं प्रमुक्तकण्ठं रुदितमासीत् ।

---

(क) काश्यप कश्यपगोत्रोत्पन्न । अयं हि कश्यपस्य विनतायां पत्न्यां उत्पन्नस्य अरुणस्य कनिष्ठः पुत्रः । तीर्थस्य गुरोः मन्त्रिणो वा गंगादितीर्थवत्पावनस्य वा ॥

(ख) पश्चिमः पश्चाद्भवः । 'अग्रादिपश्चाड्डिमच्' । कुञ्जवान् 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । दनुकबन्धाधिष्ठितः दनुनाम्ना कबन्धेन शिरोरहितेन रक्षसा । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं' इत्यमरः । अधिष्ठितः । अध्युषितः । सिद्धशबरी योगसिद्धा शबरजातीया ॥

(ग) विसृष्टामर्षधीरत्वं शोकावेगेन विसृष्टे अमर्षो धीरत्वञ्च यस्मिन्कर्मणि इति । क्रियाविशेषणमेतत् । पम्पादर्शनोद्दीपितेन शोकावेगेन रामः रावणविषयं अमर्षं, सहजं धैर्यञ्च त्यक्त्वा उच्चैः रुरोदेति भावः। अयं रोदनाख्यः सात्त्विको भावः ॥

(घ) **एतस्मिन्निति** । एतस्मिन् पम्पासरसि । बाष्पाम्भसां अश्रुजलानां 'बाष्प उष्माक्षिजलयोः' इति हैमः । परिपतनस्य यः उद्गमः आरम्भः तस्य अन्तराले मध्यकाले कुवलयिनः कुवलयानि नीलोत्पलानि विद्यन्ते येषु ते । भुवः विभागाः सन्दृष्टाः । मयेतिशेषः । कथम्भूताः मदेन कलाः मधुराव्यक्तध्वनिमन्तः 'ध्वनौ तु मधुरास्फुटे । कलः' इत्यमरः । ये मल्लिकाक्षाः तन्नामानो हंसाः 'आताम्रराजहंसाः स्युर्धार्तराष्ट्राः सितेतरैः । मलिनैर्मल्लिकाक्षाश्च कथ्यन्ते चरणाननैः' ॥ इति

(क) लक्ष्मणः । अयमार्यो हनुमान् ।

(ख) सीता । एसो सो चिरणिव्विण्ण जीअलोअ समुद्धरण गुरुओवआरी महाभाओमारुदी । (१)

(ग) रामः । दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

(घ) सीता । वच्छ एसो कुसुमिद कअम्बतरु तण्डविद बरहिणो किण्णा-महेयो गिरी । जत्थ अनुभाव सोहग्गमेत्त परिसेसधूसरसिरी मुहुत्तं मुच्छन्तो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो । (२)

---

(१) एष स चिरनिर्विण्ण जीवलोकसमुद्धरणगुरूपकारी महाभागो मारुतिः ।

(२) वत्स एष कुसुमित कदम्बतरु ताण्डवित बर्हिणः किन्नामधेयो गिरिः । यत्रानुभाव सौभाग्यमात्र परिशेष धूसरश्रीर्मुहूर्त्तं मूर्च्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ।

---

हलायुधः। मल्लिकाख्या इति पाठे मल्लिका इति आख्या नाम येषान्ते इति व्याख्येयं । तैः कर्तृभिः पक्षैः कृत्वा व्याधूतानि कम्पितानि स्फुरन्तः उरवः महान्तः दण्डाः येषां तानि पुण्डरीकाणि सतां भोजनानि येषु ते । 'पुण्डरीकं सिताम्भोजं' इत्यमरः प्रहर्षिणीवृत्तम् ॥ ३१ ॥

(क) हनूमतः पूज्यत्वासत्वयोस्सूचनाय देवयोनित्व महावीरत्व महोपकारत्वसूचनाय च सोपपदं नामग्रहणं । आर्यो हनुमानिति ॥

(ख) चिरं दीर्घकालं निर्विण्णस्य शोकेन खिन्नस्य जीवलोकस्य जीवसमूहस्य समुद्धरणेन शोकापनयेन गुरु अत्यन्तं उपकरोति तच्छीलः। सीतापहारेणाऽत्यन्त दुःखित रामदर्शनेन सकललोकस्य दुःखितत्वाज्जीवलोकस्येत्युक्तं । सीतावार्ताऽऽनयनेन सुखिनो रामस्य दर्शनाल्लोकस्याह्लादात्तस्य समुद्धरणत्वं । रावणयुद्धे प्रधानसाहाय्यकरणेन च हनूमतः गुरूपकारित्वं । एतादृशयशस्सम्पादनेन महाभाग्यता ॥

(ग) तदेव स्पष्टीकरोति रामः दिष्ट्येति । दिष्ट्येत्यानन्दे । कृतिनः धन्याः । चद्वयं उभयोरेककालिकत्वं द्योतयति ॥ ३२ ॥

(घ) वत्सेति लक्ष्मणसम्बोधनं । कुसुमानि सञ्जातानि येषान्ते तथाविधाः ये

**(क) लक्ष्मणः । सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्**
**नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।**
**(ख) रामः । वत्सैतस्माद्विरम विरमातःपरं न क्षमोऽस्मि**
**प्रत्यावृत्तः पुनरपि स मे जानकीविप्रयोगः ॥ ३३ ॥**

**लक्ष्मणः** । अतः परमार्यस्य तत्रभवतां कपिराक्षसानां चासंख्यातान्युत्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्राम्यतामिति ।

(ग) **सीता** । अज्जउत्त एदिणा चित्तदंसणेण पच्चुप्पण्णदोहदाए अत्थि मे विण्णप्पम् । (१)

**रामः** । नन्वाज्ञापय ।

(घ) **सीता** । जाणे पुणो वि पसण्णगम्भीरासु वणराइसु विहरिस्सं पवित्तसोम्मसिसिरावगाहां अ भअवदीं भाईरहीं अवगाहिस्सम् । (२)

---

(१) आर्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मे विज्ञाप्यम् ।

(२) जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्रसौम्यशिशिरावगाहां च भगवतीं भागीरथीमवगाहिष्य इति ।

---

कदम्बाः तरवः तेषु ताण्डविताः कृतताण्डवाः बर्हिणाः मयूराः यस्मिन् । ताण्डववच्छब्दात्तत्करोतीति णौ मतुब्लोपे क्तान्तं रूपं । अनुभावस्य प्रभावस्य सौभाग्यं सुभगत्वं तदेव तन्मात्रं परिशेषो यस्यास्तथाविधा धूसरा ईषत्पाण्डुः श्रीर्यस्य सः । प्ररुदितेन प्रकृष्टं रुदितं येन तेन त्वया ॥

(क) **सोयमिति** । ककुभसुरभिः ककुभैः अर्जुनपुष्पैः सुरभिः घ्राणतर्पण गन्धयुक्तः । 'इन्द्रद्रुः ककुभोऽर्जुनः' । 'सुरभिर्घ्राणतर्पणः' इति च अमरः । स्निग्धः जलपूर्णः ॥

(ख) **वत्सेति** । एतस्मात् चित्रदर्शनात् । 'जुगुप्सा विरामे'—ल्यपादानत्वं । 'व्याङ्परिभ्यो रमः' इति परस्मैपदं । सः पूर्वं अनुभूतः जानकीविप्रयोगः सीताविरहः प्रत्यावृत्तः परावृत्य आगत इव । इदञ्च रामवाक्यं भाव्यर्थसूचकम् ॥ ३३ ॥

(ग) प्रत्युत्पन्नदोहदायाः प्रत्युत्पन्नः दोहदो गर्भाभिलाषो यस्यास्तस्याः ॥

(घ) जाने प्रतिजाने । प्रसन्नपदेन श्वापदराहित्यं गम्भीरपदेन च गहनत्वं जनसञ्चा-

रामः। वत्स लक्ष्मण।

लक्ष्मणः। एषोऽस्मि।

(क) रामः। अचिरं सम्पादनीयोऽस्या दोहद इति सम्प्रत्येव गुरुभिराज्ञप्तम्। तदस्खलितसुखसम्पातं रथमुपस्थापय।

सीता। अज्जउत्त तुम्हेहिं वि तहिं गंतव्वम्। (१)

रामः। अयि कठिनहृदये एतदपि वक्तव्यमेव।

सीता। तेण हि पिअं मे। (२)

लक्ष्मणः। यथाऽऽज्ञापयत्यार्यः। (इति निष्क्रान्तः)

(ख) रामः। प्रिये इतो वातायनाऽऽवर्तके मुहूर्तं संविष्टौ भवावः।

(ग) सीता। एवं होदु। ओहरिसामि क्खु परिस्समजणिदाए णिद्दाए। (३)

रामः। तेन हि निरन्तरमत्रमवलम्बस्व मामत्र शयनाय।

(घ) जवियान्निव ससाध्वसभ्रम-
स्वेदबिन्दुरधिकण्ठमर्प्यताम्।

---

(१) आर्यपुत्र युष्माभिरपि तत्र गन्तव्यम्।

(२) तेन हि प्रियं मे।

(३) एवं भवतु। अपन्हिये खलु परिश्रमजनितया निद्रया।

---

रराहित्यञ्चद्योत्यते। पवित्रत्वेन स्नानयोग्यता, सौम्यत्वेन प्रवेशयोग्यता, शिशिरत्वेन तापहरणयोग्यता च सूच्यते। तथाविधः अवगाहः स्नानं यस्यां ताम्॥

(क) अस्खलितेति। अस्खलितः भ्रंशरहितः सुखेन अक्लेशेन सम्पातः गमनं यस्य तं। रथं उपस्थापय आनय। सीतायाः पूर्णगर्भत्वेन एतादृश एव रथो युक्त इति भावः॥

(ख) वातायनाऽऽवर्तके गवाक्षसम्बन्धिनि आवर्तके आवर्तयति स आवर्तकः अपवारकः यत्रस्थो नाऽन्यैर्लक्ष्यते इति भावः तस्मिन् विजनस्थाने संविष्टौ कृतसंवेशौ शयानौ भवावः॥

(ग) अपन्हिये अभिभूये। अपपूर्वात् ह्नो लटि उत्तमपुरुषबहुवचनं रिङ् इयङ्॥

(घ) जीवयन्निति। साध्वसं स्त्रीस्वभावसुलभं भयं तज्जनितकम्पो लक्ष्यते श्रमजनितः

बाहुरैन्दवमयूख चुम्बित-
स्यन्दि चन्द्रमणिहार विभ्रमः ॥ ३४ ॥

(क) (तथाकारयन् सानन्दम्) प्रिये किमेतत् ।

(ख) विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शेस्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ ३५ ॥

---

यः स्वेदः घर्मः तस्य विन्दवः तैस्सहितः । अत एव इन्दोरिमे ऐन्दवाः चन्द्रसम्ब-न्धिनो ये मयूखाः किरणाः तैः चुम्बिताः स्पृष्टाः अत एव स्यन्दिनः प्रस्रवयुक्ताः ये चन्द्रमणयः चन्द्रकान्ताः तेषां हारः तद्वत् विभ्रमः विलासो यस्य स तथाविधः । जीवयन् स्पर्शसुखेन प्राणान् धारयन्निव अधिकण्ठं कण्ठदेशे । विभक्त्यर्थेऽव्ययीभावः । अर्प्यतां । ते बाहुर्मदीये कण्ठे उपधानाय दीयतामिति भावः । अत्र भयश्रमस्वेदाः सात्विका भावा उक्ताः । रथोद्धतावृत्तं । 'रान्नराविहरथोद्धता लगौ' । रनराः गणाः लघुर्गुरुश्च रथोद्धता ॥ ३४ ॥

(क) कारयन्निति । तया लज्जया अनर्पणेऽपि स्वयं तथा कारयन्नित्यर्थः । किमे-तदितिप्रश्नेन निश्चयाभावः सूच्यते ॥

(ख) तदेवाह—**विनिश्चेतुमिति** । तव स्पर्शेस्पर्शे प्रतिस्पर्शे । परिमूढेन्द्रियगणः परितो मूढः मोहं प्राप्तः स्वस्वविषयाग्राहक इति यावत् इन्द्रियाणां चक्षुरादीनां गणः समूहो यस्मिन् तथाभूतः विकारः चैतन्यं ज्ञानं । भ्रमयति तिरोदधाति । सम्मीलयति च प्रकाशयति च । एवं मम बुद्धिः कदाचिद्भ्रान्ता कदाचित्प्रकाशिता विकारस्वरूपं निश्चेतुं न शक्नोति इति भावः । अयं विकारः सुखमिति निश्चेतुं न शक्यः । सुख-त्वे अस्याः तद्विषये कुतः स्वतो न प्रवृत्तिः । अतो दुःखमिति । एतदपि न निश्चेतुं शक्यं । मम तत्र प्रवृत्तेः तस्माद्विरामाऽभावात् । अतः प्रमोहः चैतन्यसम्मीलनं । प्रबोध इति पाठे जागर इत्यर्थः । त्वत्वे कुतो न निश्चीयते । अतो निद्रा स्वापः । अत एव अलौकिकं स्वप्नदृष्टमिति भावः । ननु जागृतौ अनुभूतां सीतां तर्हि कथं अनुभवामि न हि जागृतिस्थः स्वप्नेऽनुभूयते । अतः विषविसर्पः विषस्य स्थाव-रजंगमभेदेन नवविधस्य विषस्य विसर्पः सर्वाङ्गीणं प्रसरणं । तद्भक्षणन्तु मया न स्मर्यत इति चेत् । किमु मदः । मम तु सोऽपि दुर्वच इति चेत् । अत एव इदमेतदिति न निश्चेतुं शक्यः । शिखरिणीवृत्तम ॥ ३५ ॥

(क) सीता । (विहस्य) स्थिरप्पसादा तुह्मे इदो दाणीं किं मवरम् । (१)

(ख) रामः । म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

(ग) सीता । पिअंवद सइस्सम् । (इति शयनाय समन्ततो निरूपयति) । (२)

(घ) रामः । अयि किमन्वेष्टव्यम् ।

(ङ) आ विवाहसमयाद्गृहे वने
शैशवे तदनु यौवने पुनः ।

---

(१) स्थिरप्रसादा यूयमित इदानीं किमपरम् ।
(२) प्रियंवद शयिष्ये ।

---

(क) स्थिरः अविचलः प्रसादः स्नेहः प्रणयो वा येषाम् ॥
(ख) म्लानस्येति । सरोरुहाक्षि सरोरुहे इव अक्षिणी यस्याः तत्संबुद्धौ । 'बहुव्रीहौ सक्थ्यक्ष्णो'—रिति षचि 'षिद्गौरादिभ्य'—इति ङीष् । ते तव एतानि सुवचनानि सुष्टु उक्तानि । कर्णामृतानि कर्णयोरमृततुल्यानि । मनसश्च रसायनानि 'यज्जराव्याधिशमनमौषधं तद्रसायनं' इति धन्वन्तरिनिघण्टुः । यद्वा रसस्य हर्षस्य अयनानि स्थानानि 'रसो गन्धे रसो हर्षे रसः स्वादे प्रकीर्तितः' इति विश्वः । यद्वा रसस्य शृंगाररसस्य परस्परप्रीतिरूपस्य पुष्टस्य रसस्य अयनानि आश्रयभूतानि । 'शृंगारादौ विषे वीर्ये देहधातुषु पारदे' इति विश्वः । म्लानस्य अतिशुष्कस्य जीवरूपस्य कुसुमस्य पुष्पस्य । पुष्पत्वेन अतिसुकुमारता । विकासनानि विकसनकराणि । सन्तर्पणानि तृप्तिजनकानि । सकलेन्द्रियमोहकानि । रूपकालङ्कारः । वसन्ततिलकावृत्तम् ॥ ३६ ॥
(ग) रामवाक्यं श्रुत्वा सीतया रामः प्रियंवदेति सम्बोध्यते । शयनाय शयितुं । 'तुमर्थाच्चे'—ति चतुर्थी । निरूपयति उपधानादिकमन्वेषयति ॥
(घ) किमन्वेष्टव्यं । मद्बाहोरुपधानस्य सत्वे अन्यान्वेषणं विफलमिति भावः ॥
(ङ) आ विवाहेति । आ विवाहसमयात् विवाहसमयपर्यन्तं । अन्यया त्वत्तो भिन्नया अनुपाश्रितः । तदुत्तरं त्वयैवाश्रित इत्यत्र न सन्देह इति भावः । रामपदं एकपत्नीव्रतधरत्वमावेदयाति । 'उपधानं तूपबर्ह' इत्यमरः ॥ ३७ ॥

**स्वापहेतुरनुपाश्रितोऽन्यया**
**रामबाहुरुपधानमेष ते ॥ ३७ ॥**

**सीता ।** (निद्रां नाटयन्ती) अत्थि एदं अज्जउत्त अत्थि एदम् । (स्वपिति) (१)

**रामः ।** कथं प्रियवचना वक्षसि सुप्तैव । (निर्वर्ण्य सस्नेहम्) (१)

(क) **इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो–**
**रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।**
**अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः**
**किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ३८ ॥**

प्रविश्य

(ख) **प्रतीहारी ।** देअ उअत्थिदो । (२)

**रामः** अयि कः ।

---

(१) अस्त्येतदार्यपुत्र अस्त्येतत् ।
(२) देव उपस्थितः ।

---

(क) **इयमिति** । इयं गेहे लक्ष्मीः । इयं नयनयोः अमृतवर्तिः अमृतशलाका आनन्दजनिका । अस्याः असौ अनुभूयमानः स्पर्शः वपुषि मम शरीरे बहलः अतिबहलः चन्दनस्य रसः द्रवः । अयं मम कण्ठे अनया अर्पितो बाहुः शिशिरः शीतलः मसृणः स्निग्धः मौक्तिकानां मुक्तानां सरः माला । अस्याः किं न प्रेयः प्रियतरं । अपितूक्तमनुक्तं वा सर्वं प्रियतरं । यदि कादाचित्कः विरहः स्यात् स तु परं केवलं स एव एकः असह्यः । इदञ्च भाविविरहसूचनान्नाटकस्य बीजमुपन्यस्तं । तत्पक्षे यदीत्यनेन यदि वेदाः प्रमाणं स्युरितिवदवश्यं विरहस्य समनन्तरभाविता सूच्यते । 'बीजं विस्तार्यनेकधा' इति दशरूपके तल्लक्षणात् ॥

(ख) प्रतीहारी दौवारिकी । 'सन्धिविग्रहसम्बद्धं नानाकार्यसमुत्थितं । निवेदयति या कार्यं प्रतीहारी तु सा स्मृता' ॥ इति तल्लक्षणम् ॥

(क) प्रतीहारी । आसण्णपरिचारओ दुम्मुहो देअस्स । (१)

(ख) रामः । (स्वगतम्) शुद्धान्तचारी दुर्मुखः स मया पौरजानपदाननुसर्पितुं प्रयुक्तः (प्रकाशम्) आगच्छतु ।

(प्रतिहारी निष्क्रान्ता)

प्रविश्य

(ग) दुर्मुखः । (स्वगतम्) हा कधं सीदादेईए ईदिसं अचिन्तणिज्जं जणाववादं देअस्स कधइस्स । अहवा णिओओ क्खु मे इरिसो मन्दभाअस्स । (२)

सीता । (उत्स्वप्नायते) हा अज्जउत्त सोम्म कहिं सि । (३)

(घ) रामः । अये ममैव रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । सस्नेहमङ्गमस्याः परामृशन् ।

(ङ) अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।

---

(१) आसन्नपरिचारको दुर्मुखो देवस्य ।

(२) हा कथं सीतादेव्या ईदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि । अथवा नियोगः खल्वीदृशो मे मन्दभागस्य ।

(३) हा आर्यपुत्र सौम्य कुत्रासि ।

---

(क) आसन्नः निकटवर्ती परिचारकः सेवकः दुर्मुखः । परीवादकथनादस्य दुर्मुखत्वम् ॥

(ख) शुद्धान्तचारी अन्तःपुरसञ्चरणशीलः । अनुसर्पितुं । तेषां हृदयस्थान् अभिप्रायान् ज्ञातुं । प्रयुक्तः नियुक्तः ॥

(ग) हा इति शोकव्यञ्जकं । तादृशपरीवादस्य कथयिष्यमाणाच्छोकः । ईदृशं अचिन्तनीयं वक्ष्यमाणं चिन्तयितुमपि अयोग्यं । किमुत वक्तुम् ॥

(घ) रणरणकदायिनी उद्वेगदायिनी । भावना अनुभवजनितः स्मृत्युद्बोधकः संस्कारविशेषः ॥

(ङ) अद्वैतमिति । तस्य सुमानुषस्य । अत्र मानुषशब्दो जनशब्दवत्स्त्रीपुंसक

कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥ ३९ ॥

दुर्मुखः। (उपसृत्य) जअदि जअदि देओ। (१)

रामः। ब्रूहि यदुपलब्धम्।

दुर्मुखः। उवत्थुवन्ति देअं पौरजाणवदा विसुमरीदा अह्मे महाराअदसरहस्स रामभद्देण त्ति। (२)

(क) रामः। अर्थवाद एषः। दोषं तु कञ्चित् कथय येन तत् प्रतिविधीयते।

दुर्मुखः। (साश्रम्) सुणादु देओ। (कर्णे) एवं एवम्। (३)

(ख) रामः। अहह तीव्रसंवेगो वाग्वज्रः।

(मूर्च्छति)

---

(१) जयति जयति देवः।

(२) उपस्तुवन्ति देवं पौरजानपदा विस्मारिता वयं महाराजदशरथस्य रामभद्रेणेति।

(३) शृणोतु देवः। एवमेवम्।

---

साधारणः। भद्रं कल्याणं भूयात्। तच्छब्दार्थं विशदयति। यत् सुमानुषरूपं वस्तु। यत्तदोर्नित्यसम्बन्धादेकार्थत्वात्। सुखदुःखयोः अद्वैतं एकरूपं। यत् सर्वासु अवस्थासु सम्पद्विपद्रूपासु अनुगुणं अनुकूलं। यत्र हृदयस्य विश्रामः। विश्राम इति अपाणिनीयं। घञि 'नोदात्तोपदेशस्ये'—ति वृद्धिनिषेधेन रूपस्य दुर्लभत्वात्। किन्तु श्रम एव श्राम इति 'प्रज्ञादिभ्यश्च' इत्यणि कथञ्चिद्योज्यं। यस्मिन् जरसा वार्धकेन रसः प्रीतिः अहार्यः हर्तुमशक्यः। 'ऋहलोर्ण्यत्' इति हृञो ण्यत्। यत् कालेन शैशवापगमेन आवरणात्ययात् लज्जाभयाद्यपगमात्। परिणते प्रेमसारे यत् स्थितं। हीति निश्चये। एकं तत् वस्तु कथमपि महता दैवेन काकतालीयन्यायेन प्राप्यते। द्वितीयस्य तु तादृशस्य प्राप्तिसम्भावनाऽपि नेति भावः। यद्वा तस्य सुमानुषस्य एकं भद्रं कल्याणं अर्थात् प्रेमरूपं कथमपि महता क्लेशेन प्राप्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

(क) तत् अव्ययमिदं। दोष इत्यर्थः ॥

(ख) अहह खेदे। 'अहहाऽर्तिषु' इति सागरः। तीव्रः दुःसहः संवेगः प्रसर्पणं यस्य स तथोक्तः वागेव वज्रः। 'ह्रादिनी वज्रमस्त्री स्या'—दित्यमरः ॥

दुर्मुखः । आस्ससदु देओ । (१)

रामः । (आश्वस्य)

(क) हा हा धिक् परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत् पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसृतम् ॥ ४० ॥

तत् किमत्र मन्दभाग्यः करोमि । (विमृश्य सकरुणम्) अथवा किमन्यत् ।

(ख) सतां केनापि कार्येण लोकस्याराधनं व्रतम् ।
यत् पूरितं हि तातेन माञ्च प्राणांश्च मुञ्चता ॥ ४१ ॥

संप्रत्येव भगवता वसिष्ठेन सन्दिष्टम् ।

अपिच

(ग) यत् सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात् कश्मला किंवदन्ती
स्याच्चेदस्मिन् हन्त धिङ्मामधन्यम् ॥ ४२ ॥

---

(१) आश्वसितु देवः ।

---

(क) हा हेति । अद्भुतैः अग्निशुद्ध्यादिभिः प्रशमितं परिहृतं । दैवस्य भाग्यस्य दुर्विपाकात् दुष्टात् परिणामात् आलर्कं 'अलर्कस्तु सयोगित' इत्यमरः । औषधादिना उन्मादं नीतः श्वा तस्य इदं विषं । शुक्लार्कवृक्षजन्यं वा । 'शुक्लेऽलर्कप्रतापसौ' इत्यमरः । तद्वत् सर्वतः सर्वत्र । सार्वविभक्तिकस्तसिः । प्रसृतं व्याप्तम् ॥ ४० ॥

(ख) सतामिति । केनाऽपि लोकोत्तरेणाऽपि माञ्च प्राणांश्च । चद्वयेन कार्यकारणयोरेककालिकत्वं । मुञ्चता तातेन पूरितं हि पूरितमेव । अतिशयोक्तिरलङ्कारः ॥ ४१ ॥

(ग) यदिति । सावित्रैः सवितृवंशभवैः लोकश्रेष्ठैः भूमिपालैः । यत् साधु पुण्यं शुद्धं स्वदोषस्पर्शशून्यं चरित्रं । दीपितं प्रकाशितं । अस्मिन् चरिते मत्सम्बन्धात् मत्सम्पर्कात् । कश्मला मलिना । किंवदन्ती जनश्रुतिः । स्याच्चेत् इदं असम्भावितं भवेच्चेत् । हन्त इति खेदे । अधन्यं पुण्यलेशरहितं मां धिक् । शालिनीवृत्तम् ॥ ४२ ॥

(क) हा देवि देवयजनसम्भवे हा स्वजन्मानुग्रहपवित्रितवसुन्धरे निमिजनकवंशनन्दिनि हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि हा राममयजीविते हा महारण्यवासप्रियसखि हा तातप्रिये हा प्रियस्तोकवादिनि कथमेवंविधायास्तवायमीदृशः परिणामः ।

(ख) त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

(ग) रामः । दुर्मुख ब्रूहि लक्ष्मणमेष ते नूतनो राजा रामः समाज्ञापयति । (कर्णे) एवमेवम् ।

दुर्मुखः । कहं दाणीं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तरहुउलसन्ताणाए देइए दुज्जणवअणादो एवं अणज्जं अज्झवसिदं देएण । (१)

---

(घ) (१) कथमिदानीमग्निपरिशुद्धाया गर्भस्थितपवित्ररघुकुलसन्तानाया देव्या दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

---

(क) देवयजनं यज्ञभूमिः । स्वजन्मैव अनुग्रहः । पवित्रिता पवित्रीकृता । 'तत्करोती'–ति णिजन्तात् क्तः । यया स्वमाता पवित्रिता तस्याः पावित्र्यं वाचामगोचरमिति भावः । निमिः विदेहनामराजा प्रशस्तं स्तुत्यं । राममयेति स्वार्थे मयट् । चिन्मयमितिवत् राम एव जीवितं यस्याः । एवञ्च मद्वियोगे तव जीवितमेव नश्येदिति भावः । महारण्ये यो वासः तत्र प्रियसखि । यद्वा त्वत्कर्तृकः महारण्यवासः स प्रियो यस्य तस्य मम सखि । अथवा महारण्यवासः प्रियो यस्यास्तथाभूते सखि । तातप्रिये तातस्य जनकस्य प्रिय । जनकः यदि इमां वार्तां श्रुणुयात् तर्हि सद्यो जीविताद्भ्रश्येत् मां वा सद्यः शपेदिति भावः । स्तोकं मितं प्रियञ्च वदति सा । एवंविधायाः अतिशुद्धायाः उभयकुलप्रियायाः तव ईदृशः लोकापवादकृतः त्यागरूपः अयं परिणामः ॥

(ख) त्वयेति । विषमालङ्कारः ॥ ४३ ॥

(ग) नूतनो राजा । नूतनराजपदाभ्यां प्रजानुरञ्जनमात्राग्रहवत्वेन कार्याकार्यविवेकविधुरत्वं व्यज्यते । ततश्च मदाज्ञाया अकरणे तवाऽपि वधप्रसक्तिरिति च व्यज्यते ॥

(घ) गर्भे स्थितं पवित्रं रघुकुलं सन्तानं यस्यास्तस्याः । एवं त्यागरूपं अध्यवसितं निश्चितम् ॥

(क) रामः । शान्तं कथं दुर्जनाः पौरजानपदाः ।

(ख) इक्ष्वाकुवंशोद्भवतः प्रजानां
जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदतिदूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

दुर्मुखः । हा देइ । (१) (निष्क्रान्तः)

(ग) रामः । हा कष्टमतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः

(घ) शैशवात् प्रभृति पोषितां प्रियै-
स्सौहृदादपृथगाशयां प्रियाम् ।
छद्मना परिददामि मृत्यवे
सौनिको गृहशकुन्तिकामिव ॥ ४५ ॥

---

(१) हा देवि ।

---

(क) शान्तं असम्भाव्यम् ॥

(ख) इक्ष्वाकिति । इक्ष्वाकुवंशात् प्रजाश्रयभाजनात् उद्भवः उत्पत्तिर्यस्य तस्मान्मत्तः । दैवात् प्रजानां वचनीयस्य निन्दायाः बीजं रक्षोगृहस्थितिरूपं जातं उत्पन्नं । विशुद्धिकाले अग्निशुद्धिसमये यच्च । चकारोन्वाचये । आनुषंगिकत्वं द्योत्यते । अद्भुतंकर्म अग्निमध्यात्सशरीरायाः साभरणायाः सवस्त्रायाः अक्षतायाः निर्गमनं दशरथप्रभृतिभिः स्वर्गादागत्य साक्ष्यदानं देवतादिभिः मत्प्रतिबोधनं कः प्रत्येतु विश्वसितु । हि यतः । तत् सर्वं अतिदूरं समुद्रमध्यस्थायां लोकैरगम्यायां लङ्कायांवृत्तं सम्पन्नम् ॥ ४४ ॥

(ग) अतिबीभत्सं अतिनिन्द्यं गर्भिणीत्यागरूपं कर्म यस्य सः । संवृत्तः जातः ॥

(घ) अतिबीभत्सत्वं विशदयति । शैशवादिति । शैशवात् बाल्यात्प्रभृति । 'कार्तिक्या आग्रहायणीमासे कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी । सौहृदात् सुहृद्भावात् । अयं प्रयोगः चिन्त्यः 'हृद्भगे'—ति वृद्धया सौहार्दमित्यस्य न्याय्यत्वात् । अपृथगाशयां अभिन्नचित्तां । छद्मना दोहदपूरणमिषेण मृत्यवे परिददामि । तत्र अनुरूपं दृष्टान्तमाह । सौनिकः सूना वधस्थानं तज्जीविकात्वेन अस्ति

(क) तत् किमस्पर्शनीयः पातकी देवीं दूषयामि । (सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन्)

(ख) अपूर्वकर्मचाण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

(ग) (उत्थाय) हन्त विपर्यस्तः संप्रति जीवलोकः पर्यवसितं जीवितप्रयोजनं रामस्य । शून्यमधुना जीर्णारण्यं जगत् । असारः संसारः । कष्टप्रायं शरीरम् । अशरणोऽस्मि किं करोमि का गतिः । अथवा

(घ) दुःखसंवेदनायैव रामे चैतन्यमाहितम् ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं स्थिरैः ॥ ४७ ॥

---

यस्य सः वधाजीवः गृहशकुन्तिकां । गृहपदं बाल्यप्रभृति पालनं व्यनक्ति । अनुकम्पायां कन् । अनुकम्प्यां शकुन्तीं पक्षिणीं । स्त्रीत्वं व्याधेरहिंस्यायाऽपि हिंसकत्वसूचकं । तादृशीमपि यथा मृत्यवे परिददाति तथाऽहमपि निष्कृपः सीतामरण्ये मृत्यवे परिददामीति भावः । 'शकुन्तपक्षिशकुनिशकुन्ति शकुनद्विजाः' इत्यमरः । रथोद्धतावृत्तम् ॥ ४५ ॥

(क) अस्पर्शनीयः स्प्रष्टुमयोग्यः । तत्र हेतुः पातकीति । अदुष्टसतीत्यागित्वात् ॥

(ख) अपूर्वेति । कर्मणा सतीत्यागरूपेण चाण्डालः अपूर्वः नवीनः गर्भिणीत्यागात् । चाण्डालोऽपि स्वभार्यां न त्यजति तत्राऽपि सतीं तत्राऽपि गर्भिणीं । अहन्तु तां त्यजन् तस्मादप्यधिक इति भावः । तं मुग्धे मूर्खे । ईदृशस्य ममाश्रयणेन तव मूर्खत्वमिति भावः । अयि मां विमुञ्च विशेषेण मुञ्च त्यज । चन्दनभ्रान्त्या चन्दनवृक्षोऽयमिति भ्रमेण दुर्विपाकं दुष्परिणामं विषद्रुमं श्रितासि आश्रितासि । अयं दृष्टान्तालङ्कारः ॥ ४६ ॥

(ग) हन्त खेदे । विपर्यस्तः विपरीतं परिणतः । यदधुना विपरीतं सर्वं भाति । रामस्य जीवितप्रयोजनं जीवनफलं पर्यवसितं समाप्तं । इतः परं जीवने फलाभावः । जीर्णारण्यं तत्सदृशं जीर्णत्वेन छायाफलपुष्पाद्यभावः शून्यं जगत् । असारः संसारः सतीभार्या सुतश्च संसारे सारं तत्त्यागात् असारः । कष्टप्रायं कष्टबाहुल्यं । अशरणः शरणं रक्षकं गृहं स्त्री वा तद्रहितः सन्न्यासी तत्तुल्यः । का गतिः । इह स्त्रीरहितत्वात्परत्र एवंविधपापकर्तुः नरकपातावश्यंभावात् । अथ वा किं करोमीत्यर्थः ॥

(घ) दुःखेति । रामे । अकार्यकारित्वाद्रामे अकारिणि । दुःखसंवेदनायैव दुःखोपभोगायैव । तादृशे जने । चैतन्यं आहितं अर्पितं । एवं दुःखातिशयेन चैतन्यमपग-

(क) हा अम्ब अरुन्धति हा भगवन्तौ वशिष्ठविश्वामित्रौ हा भगवन् पावक हा देवि भूतधात्रि हा तात जनक हा तात हा मातरः हा परमोपकारिन् लङ्काधिपते विभीषण हा प्रियसख सुग्रीव हा सौम्य हनुमन् हा सखि त्रिजटे मुषिता स्थ परिभूताः स्थ रामहतकेन । अथवा कश्च तेषामहमिदानीमाह्वाने ।

(ख) ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

योऽहम्

(ग) विश्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥ ४९ ॥

---

च्छेत् तत्राऽऽह—मर्मेति । मर्मोपघातिभिः मर्माणि चैतन्यस्थानानि उपहन्तुं शीलं येषां तथाविधैः स्थिरैः प्राणैः । वज्रकीलायितं वज्रमयाः कीलाः शङ्कवः वज्रकीलाः तद्वदाचरितं । क्यङन्ताद्भावे क्तः । वज्रत्वेन अतिकठिनत्वं व्यज्यते । यतः प्राणरूपैः वज्रकीलैः कीलितं चैतन्यं अतो बहिर्निर्गन्तुं नेष्टे इति भावः । अतः किं करोमीति भावः ॥ ४७ ॥

(क) रामहतकेन । अतिपापकारितया हतात्मना रामेण मुषिताः सीताहरणहृतसर्वस्वाः परिभूताः तिरस्कृताः अवमानिताः । अथ वा पक्षान्तरे । कश्च । मम तेषां नामग्रहणाधिकारो नास्तीति भावः ॥

(ख) **तेहीति** । तेषां महात्मनां नाम्नो मया ग्रहणे तेन सम्बन्धेन पापस्पर्श उत्प्रेक्ष्यते ॥ ४८ ॥

(ग) किंतत्पापं येनैवं शोचसि । तत्र विश्वासघातित्वमेवेत्याह—**विश्रम्भादिति** योऽहं निर्दयः दयाशून्यहृदयः । उरसि निपत्य विश्रम्भात् विश्वासात् । लब्धा निद्रा यया तां । गृहस्य शोभाभूतां प्रियां गृहिणीं गृहस्वामिनीं । आतङ्केन सन्तापेन 'रुक्तापशंकास्वातङ्कः' इत्यमरः । स्फुरितः कठोरो यो गर्भः तेन गुर्वीं सीतां । क्रव्याद्भ्यः आममांसभक्षकेभ्यः राक्षसादिभ्यः बलिमिव पूजोपहारमिव क्षिपामि त्यजामि ॥ ४९ ॥

(क) (सीतायाः पादौ शिरसि कृत्वा) देवि देवि अयं पश्चिमस्ते रामस्य शिरसा पादपङ्कजस्पर्शः । (रोदिति)

(ख) (नेपथ्ये)

(ग) अब्रह्मण्यमब्रह्मण्यम ।

रामः । ज्ञायतां भोः किमेतत् ।

(पुनर्नेपथ्ये)

(घ) ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमः शरण्यं त्वामुपस्थितः ॥ ५० ॥

(ङ) रामः । आः कथमद्यापि राक्षसत्रासः । तद्यावदस्य दुरात्मनः कुम्भीनसीपुत्रस्योन्मूलनाय शत्रुघ्नं प्रेषयामि । (कतिचित्पदानि गत्वा पुनः प्रतिनिवृत्य) हा देवि कथमेवंगता भविष्यासि भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

(च) जनकानां रघूणां च यत् कृत्स्नं गोत्रमंगलम् ।
तां देवयजने पुण्ये पुण्यशीलामर्जाजनः ॥ ५१ ॥

(निष्क्रान्तः)

---

(क) पश्चिम अन्त्यः । 'अन्त्यपाश्चात्यपश्चिमः' इत्यमरः । इतः परं त्वत्त्यागेन सङ्गमाद्यभावेन नमस्कारस्य प्रसक्त्यभावादिति भावः ॥

(ख) रसान्तरेण शोकमपनेतुमाह—नेपथ्ये इति ॥

(ग) अब्रह्मण्यं । अवध्या वयं यथा भवेम तथा यतेथाः इत्यर्थसूचकमिदं । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः ॥

(घ) **ऋषीणामिति** । तपसः उग्रत्वेन तेषां शापदानयोग्यता । स्तोमः समूहः । शरण्यं शरणे साधुं रक्षणकर्तारम् ॥ ५० ॥

(ङ) कुम्भीनसी लवणमाता । उन्मूलनाय नाशाय । एवं गता मया त्यक्ता । श्लाघ्यां स्तुत्यां अदृष्टां दृष्टत्वे मात्राऽपि परित्यागः सम्भाव्यते ॥

(च) **जनकानामिति** । गोत्रस्य वंशस्य मंगलं मंगलभूता यत् या तां सीतां पुण्य-

सीता । हा सोम्म अज्जउत्त कहिं सि । (सहसोत्थाय) हद्धी हद्धी दुस्सिविणेण विप्पलद्धा अहं अज्जउत्तं आक्कन्दामि । (विलोक्य) हद्धी हद्धी एआइणिं मं पमुत्तं उज्झिअ गदो अज्जउत्तो । किं दाणीं एदं । भोदु से कुविस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं । को एत्थ परिअणो । (१)

(प्रविश्य)

दुर्मुखः । देइ कुमारलक्खणो विण्णवेदि सज्जो रहो आरुहदु देइत्ति । (२)

सीता । इअं आरुहामि । (उत्थाय) परिप्फुरइ विअ मे गब्भभारो ता सिहिलं गच्छह्म । (३)

दुर्मुखः । इदो इदो देइ । (४)

---

(क) (१) हा सौम्य आर्यपुत्र कुत्रासि । हा धिक् हा धिक् दुःस्वप्नेन विप्रलब्धाऽहमार्यपुत्रमाक्रन्दामि । हा धिक् हा धिक् एकाकिनीं मां प्रसुप्तामुज्झित्वा गत आर्यपुत्रः । किमिदानीमेतत् । भवतु तस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

(२) देवि कुमारलक्ष्मणो विज्ञापयति सज्जो रथ आरोहतु देवीति ।

(३) इयमारोहामि । परिस्फुरतीव मे गर्भभारस्तच्छिथिलं गच्छावः ।

(४) इत इतो देवि ।

---

शीलां पुण्ये देवयजने त्वं अजीजनः उत्पादितवत्यसि । अतस्त्वद्दुहिता सेति लोके अदुष्टा भर्त्रा त्यक्ता मातादिभी रक्ष्यते इति भावः लोकोक्तिरलङ्कारः ॥ ५१ ॥

(क) विप्रलब्धा वञ्चिता । एकाकिनीं असहायां । यदीति । तद्दर्शने मानजन्यको-

सीता । णमो तपोधणाणं णमो रहुउलदेअदाणं उत्तचरणकमलाणं णमो सअलगुरुअणाणं । (१)

---

(१) नमस्तपोधनेभ्यो नमो रघुकुलदेवताभ्यो नम
णकमलेभ्यो नमस्सकलगुरुजनेभ्यः । (

---

पनाशात् स्वस्य प्रभुत्वे एव संशयः । कोपस्तु दुरत इति भावः ॥

इति भावभूतार्थबोधिन्यां प्रथमाङ्कः समाप्तिं गतः ॥ १ ॥

चित्रदर्शनो नाम

प्रथमोऽङ्कः ।

——:o:——

(क) (नेपथ्ये)

स्वागतं तपोधनायाः ।

(प्रविश्य)

(ख) अध्वगवेशा तापसी । अये वनदेवतेयं फलकुसुमपल्लवार्घ्येण मामुपतिष्ठते ।

(प्रविश्य)

वनदेवता । (अर्घ्यं विकीर्य ।)

(ग) यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः संगः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

---

(क) नेपथ्यपात्रेण वासन्तिकया वनदेवतया आत्रेय्याः प्रवेशसूचनाच्चूलिकेयम् 'अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनम्' इति तल्लक्षणात् ॥

(ख) अध्वगानां पथिकानां वेश इव वेशः नेपथ्यं यस्याः सा । फलकुसुमपल्लवैः युक्तेन अर्घ्येण । अर्घार्थमुदकमर्घ्यं तेन । 'मूल्ये पूजाविधावर्घः' इत्यमरः । 'पादार्घाभ्यां च' इतियत् उपतिष्ठते । 'उपाद्देवपूजे'—ति आत्मनेपदं । अतिथीनां देवत्वं पूज्यत्वात् ॥

(ग) **यथेच्छमिति** । इदं वनं वः युष्माकमेव । इति विनयोक्तिः । यथेच्छं इच्छानतिक्रमेण भोग्यं । न सङ्कोचः करणीय इति भावः । अत्र यद्यपि आरण्यकेषु परिग्रहात्स्वत्वमिति यथेच्छमित्याद्युक्तौ प्रयोजनाभावः । तथापि स्वस्य वनदेवतात्वख्यापनाय वने स्वत्वं मम वर्तत इति सूचयितुं तथोक्तिः । सुदिवसः भवदागमजन्यहर्षेण दिवसस्य शोभनत्वं । तत्राऽर्थान्तरं न्यस्यति । सतां सद्भिः संगः कथमपि । अनेन पुण्यस्य दुष्प्रापत्वं । हिःएवाऽर्थे । नेतरैः साधनैरिति भावः । एवञ्च जन्मान्तरीयपुण्यपरिपाकवशादेव भवत्या आगमनमित्यर्थः । तदपि तरुच्छायादिकमपि । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यां' इति एकशेषैकवद्भावौ । न पराधीनं । किन्तु भवदधीनमेव । तस्माद्यथासुखं भुङ्क्ष्वमिति भावः ॥ १ ॥

(क) **तापसी** । किमत्रोच्यते

(ख) **प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः**
**प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।**
**पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं**
**रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥**

( उपविशतः )

(ग) **वनदेवता** । कां पुनरत्रभवतीमवगच्छामि ।

**तापसी** । आत्रेय्यस्मि ।

(घ) **वनदेवता** । आर्ये आत्रेयि कुतः पुनरिहागम्यते किं प्रयोजनं वा दण्डकारण्यप्रवेशस्य ।

(ङ) **आत्रेयी** । **अस्मिन्नगस्त्यप्रमुखाः प्रदेशे**
**भूयांस उद्गीथविदो वसन्ति ।**
**तेभ्योऽधिगन्तुं निगमान्तविद्यां**
**वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥**

---

(क) किमिति । नाऽत्र किञ्चिद्वक्तव्यमिति भावः ॥

(ख) **प्रियप्रायेति** । वृत्तिः व्यवहारः । प्रियप्राया प्रायेण बाहुल्येन प्रिया अतिप्रीतिकरी । वाचि नियमः प्रकारः विनयमसृणः विनयेन मसृणः कोमलः । मधुरा वागेवामित्यर्थः । साधवो हि नितरां कर्णामृतमेवाऽऽलपन्ते इति भावः । मतिः बुद्धिः प्रकृत्या स्वभावेन कल्याणी मंगलरूपा । परिचयः अनवगीतः अनिन्दितः दोषस्पर्शशून्यः । पुरो वा संगमात्पूर्वं परिचयाभावेऽपि । पश्चाद्वा अविपर्यासितरसं न विपर्यासितः वैपरीत्यमप्राप्तः रसः अनुरागो यस्मिन् । अनुपधि न विद्यते उपधिः छद्म यस्मिन् अत एव विशुद्धं विशेषेण शुद्धं । साधूनां इदं तद्रहस्यं चरितं विजयते सर्वोत्कर्षेण वर्तते ॥ २ ॥

(ग) कामवगच्छामि कां ज्ञास्यामि । त्वन्नामोच्यतामिति भावः ॥

(घ) कुतः कस्माद्देशात् ॥

(ङ) **अस्मिन्निति** । उद्गीथविदः ओँकारः उद्गीथं तद्वाच्यं ब्रह्म उद्गीथं तद्विदः शब्दब्रह्मपरब्रह्मविदः । तेभ्यः । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी । निगमान्तविद्या वेदान्तविद्यां । अधिगन्तुं ज्ञातुं । वाल्मीकिपार्श्वात् । प्रयागात् काशीं गच्छतीतिवद्बुद्धिकल्पितं विभागं परिकल्प्य अपादानत्वम् ॥ ३ ॥

(क) **वनदेवता** । यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत् कोऽयमार्याया दीर्घप्रवासप्रयासः ।

(ख) **आत्रेयी** । तत्र महानध्ययनप्रत्यूह इति दीर्घप्रवासोऽङ्गीकृतः ।

**वनदेवता** । कीदृशः ।

(ग) **आत्रेयी** । तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रे वयसि वर्त्तमानं दारकद्वयमुपनीतम् । तत् खलु न केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति ।

**वनदेवता** । अपि तयोर्नामसंविज्ञानमस्ति ।

**आत्रेयी** । तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता** । कीदृशः प्रभावः ।

(घ) **आत्रेयी** । तयोः किल सरहस्यजृम्भकास्त्राण्याजन्मसिद्धानीति ।

**वनदेवता** । अहो नु भोश्चित्रमेतत् ।

(ङ) **आत्रेयी** । तौ च भगवता वाल्मीकिना धात्रीकर्म वस्तुतः परिगृह्य पोषितौ परिरक्षितौ च वृत्तचौडकर्मणोश्च तयोस्त्रयीवर्ज्यमितरास्तिस्रो

---

(क) पुराणब्रह्मवादिनं ब्रह्म वेदं वदति शिष्येभ्यः तं पुराणं पुरातनं ऋषिं । प्रख्यातं वेदाध्यापकमित्यर्थः । प्राचेतसं वरुणपुत्रं । ब्रह्मपारायणाय वेदपारगमनाय समग्रवेदाध्ययनाय । उपासते अन्तेवासिनो भवन्ति ॥

(ख) प्रत्यूहः विघ्नः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ॥

(ग) सर्वप्रकाराद्भुतं सर्वैः प्रकारैः अद्भुतं । त्यजति अस्मिन्निति त्यागं अधिकरणे घञ् । स्तने भवं स्तन्यं तस्य त्यागं तदेव तन्मात्रं तस्मिन् वयसि । शिशुत्वे इति यावत् । दारकद्वयं बालकद्वयं । उपनीतं समर्पितं । आन्तराणि वृक्कादीनि । उपस्नेहयति स्नेहवन्ति करोति । स्नेहवच्छब्दात्तत्करोतीति णिच् मतुब्लोपः ॥

(घ) सरहस्येति प्रयोगसंहारमन्त्रसहितानि । प्रथमाङ्कोपक्षिप्तस्य सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति बीजस्योद्घाटनमिदम् ॥

(ङ) वस्तुतः स्वारस्येन । धात्रीकर्म धात्र्याः उपमातुः कर्म परिगृह्य अङ्गीकृत्य । वृत्तचौडकर्मणोः वृत्तं सम्पादितं चौडं चूडारूपं कर्म ययोस्तयोः । त्रयी वेदास्त्रयः ऋग्यजुःसामानि । तेषां पठने उपनयनं विनाऽनधिकारात् । इतराः तिस्रः विद्याः अन्वीक्षिकी, वार्ता, दण्डनीतिश्च । क्षात्रेण क्षत्रियाणां उपदिष्टेन कल्पेन अनुष्ठान-

विद्याः सावधानेन परिनिष्ठापिताः । समनन्तरञ्च गर्भैकादशेवर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ नह्येताभ्यामतिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः

(क) वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च तयोर्भूयान् भेदः फलं प्रति तत्तथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ ४ ॥

**वनदेवता** । अयमसावध्ययनप्रत्यूहः ।

**आत्रेयी** । अपरश्च ।

**वनदेवता** । अथापरः कः ।

**(ख) आत्रेयी** । अथ स ब्रह्मर्षिरेकदा मध्यन्दिनसमये नदीं तमसामनुप्रपन्नः । तत्र च युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानमपश्यत् । आकस्मिकप्रत्यवभासां च देवीं वाचमव्यतिकीर्णवर्णामानुष्टुभेन छन्दसा परिच्छिन्नामभ्युदैरयत् ।

---

क्रमेण । उपनीय उपनयनाख्यसंस्कारेण संस्कृत्य । त्रयीविद्यां । 'गतिबुद्धी'–ति कर्मत्वं । मेधा कालान्तरस्मृत्यनुकूला धारणावती धीः प्रज्ञा प्रतिभा नवनवोल्लासशालिनी बुद्धिः यद्वा गुरूक्तसकलार्थावबोधनसामर्थ्यवती धीः ते अतिप्रदीप्ते ययोस्ताभ्यां सह । अस्मदादेः मम अन्यस्य वा अध्ययनस्य योगः संगतिः । सम्भावनेति यावत् ॥

(क) **वितरतीति** । तथा प्राज्ञे बुद्धिमति । सम्प्रदानस्याऽधिकरणत्वविवक्षया सप्तमी । विद्यां वितरति ददाति । तयोः प्राज्ञजडयोः । भूयान् बहुलः । फलम्प्रति फलविषये । प्रतियोगे द्वितीया । तत् भेदभवन तथा निश्चितं शुचिः निर्मलः मणिः हीरकादिः । बिम्बोद्ग्राहे बिम्बस्य उद्ग्राहे प्रतिफलने । धारणे इति यावत् । प्रभवति समर्थो भवति । तथा च नाऽत्र गुरुरपराध्नोतीति भावः ॥ ४ ॥

(ख) तमसां तन्नाम्नीं । युग्मचारिणोः सहचरतोः । क्रौञ्चयोः तन्नाम्नोः पक्षिणोर्मध्ये । आकस्मिकप्रत्ययभासां अकस्माद्भवः आकस्मिकः अध्यात्मादित्वाट्ठञ् । अव्ययानां भमात्रे टिलोपः । अकारणः प्रत्ययभासः आविर्भावो यस्यास्तां । अव्यतिकीर्णवर्णां अव्यतिकीर्णाः अविपर्यस्ताद्युपरचिताः वर्णाः यस्यां तां । आनुष्टुभेन छन्दसा अनुष्टुब्नामकेन छन्दसा परिच्छिन्नां । अभ्युदैरयत् उच्चारितवान् ॥

(क) मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥

(ख) **वनदेवता** । चित्रमाम्नायादन्यो नूतनश्छन्दसामवतारः ।

(ग) **आत्रेयी** । तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसंक्रम्य भगवान् भूतभावनः पद्मयोनिरवोचत् । ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद् ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः आद्यः कविरसीत्युक्त्वा तत्रैवान्तर्हितः । अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

(घ) **वनदेवता** । हन्त तर्हि पण्डितः संसारः ।

---

(क) **मा निषादेति** । हे निषाद व्याध त्वं शाश्वतीः निरन्तराः समाः वत्सरान् अत्यन्तसंयोगे द्वितीया । प्रतिष्ठां मा अगमः । नाऽयं माङ् किन्तु माशब्दः अतो 'नमाङ्योगे' इति अडागमनिषेधो न । यत् यतो हेतोः क्रौञ्चमिथुनात् एकं काममोहितं अवधीः हतवानसि । इयं वाक् काव्यार्थबीजं । तद्यथा । हे मानिषाद मा लक्ष्मीर्निषीदति अस्मिन् तत्सम्बोधनं । रामस्य विष्णुत्वात्सीतायाश्च लक्ष्म्यंशत्वात् । हे राम त्वं शाश्वतीरित्यादि पूर्ववत् । अगमः प्राप्तवानसि । यत् क्रौञ्चमिथुनात् 'क्रुञ्च' कौटिल्याल्पीभावयोः इति धातोः पचाद्यच् क्रुञ्चौ तौ एव क्रौञ्चौ कुटिलाल्पौ तयोः वालितारयोः रावणमन्दोदर्योर्वा यन्मिथुनं तस्मादेकं काममोहितं कामतः (भ्रातृपत्न्यां) रुमायां रममाणं वालिनं सीतायां आसक्तचित्तं रावणञ्च अवधीरिति ॥५॥

(ख) आम्नायात् वेदात् । नूतनः । वेदे तु अक्षराणां अनियतत्वं अत्र तु नियतत्वमिति अस्य नूतनत्वम् ॥

(ग) समयेन रामायणप्रवक्ताऽयं भवतु इति सङ्केतेन । आविर्भूतः स्वत एव प्रकटीभूतः शब्दब्रह्मणः मानिषादेत्यादेः श्लोकस्य प्रकाशो यस्मात्तं । उपसंक्रम्य प्राप्य । भूतानां जरायुजादीनां भावनः इच्छामात्रेण स्रष्टा । पद्मयोनिर्ब्रह्मा । प्रबुद्धः प्रकर्षेण बुद्धः ज्ञानवान् । अव्याहतज्योतिः अव्याहतं कुत्राऽपि अकुण्ठितं ज्योतिः प्रकाशो यस्य तथा । आर्षं ऋषीणां इदं आर्षं मनुष्येषु अदृष्टं । ते चक्षुः प्रातिभं 'प्रज्ञा नवनवोल्लासशालिनी प्रतिभामता' इति वाग्भट्टः । 'प्रसन्नपदनव्यार्थयुक्त्युद्बोधविधायिनी । स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी' ॥ इति च । ज्ञानमयं भवतु । विवर्तं परिणामं । इतिहासं इति ह इति निपातः प्रसिद्धिद्योतकः इति ह आस बभूव इति यत्र उच्यते तं इतिहासं पुरावृत्तं । रामायणस्य भविष्यद्वृत्तत्वेऽपि कल्पान्तरभवत्वात्पुरावृत्तत्वं । प्रणिनाय निर्मितवान् ॥

(घ) वाल्मीके रामायणनिर्मितौ प्रवृत्तत्वात्संसारस्य पण्डितत्वम् ॥

आत्रेयी । तस्मादवोचं तदनुरोधान्नस्तत्राहि महानध्ययनप्रत्यूह इति ।

वनदेवता । युज्यते ।

आत्रेयी । विश्रान्तास्मि भद्रे । संप्रत्यगस्त्याऽऽश्रमस्य पन्थानं ब्रूहि ।

(क) वनदेवता । इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरी-तीरेण ।

(ख) आत्रेयी । (सबाष्पम्) अप्येतत्तपोवनम् । अप्येषा पञ्चवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि जनस्थान-देवता वासन्ती त्वम् ।

वासन्ती । अस्त्येतत् सर्वम् ।

आत्रेयी । वत्से जानकि

(ग) स एव ते वल्लभबन्धुवर्गः
प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृश्यामिव नः करोति ॥ ६ ॥

(घ) वासन्ती । (सभयं स्वगतम्) कथं नामशेषा मित्याह । (प्रकाशम्) आर्ये किमत्याहितं सीतादेव्याः ।

---

(क) पञ्चानां वटानां समाहारः पञ्चवटी । 'द्विगोः' इति ङीप् । 'अकारान्तोत्तर-पदो द्विगुः स्त्रियामिष्टः' ॥

(ख) सबाष्पं । रामपरित्यक्तसीतास्मरणाद्बाष्पोद्गमः । अपिः सम्भावनायाम् ॥

(ग) स इति । स एव इति स्मृतेरभिनयः वल्लभः बन्धूनां तत्तुल्यानां तपोवनादीनां वर्गः । प्रासङ्गिकीनां प्रसंगोऽवसरः तस्मादागतानां त्वया मार्गदर्शनव्याजेन प्रतिपादितानां वाल्मीकेराश्रमेऽपि रामायणे श्रुतानां कथानां विषयः । नामशेषां सीता इति नाम एव शेषो यस्यास्तां । न तु विद्यमानां । अधुनाऽपि चक्षुषा श्रोत्रेण वाऽनुपलब्धेः । [illegible] । नः अस्माकं । प्रत्यक्षदृश्यां प्रत्यक्षं द्रष्टुं योग्यामिव करोति ॥ ६ ॥

(घ) अत्याहितं महाभीतिः ॥

(क) **आत्रेयी** । न केवलमत्याहितं सापवादमपि । ( कर्णे एवमेवम् )

(ख) **वासन्ती** । अहह दारुणो दैवनिर्घातः ।

( मूर्च्छति )

**आत्रेयी** । भद्रे समाश्वसिहि समाश्वसिहि ।

(ग) **वासन्ती** । हा प्रियसखि हा महाभागे ईदृशस्ते निर्माणभागः। रामभद्र रामभद्र । अथवा अलं त्वया । आर्ये आत्रेयि अथ तस्मादरण्यात् परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ।

**आत्रेयी** । नहि नहि ।

(घ) **वासन्ती** । हा कष्टम् । अरुन्धतीवसिष्ठाधिष्ठितेषु रघुकुलकदम्बकेषु जीवन्तीषु प्रवृद्धासु राज्ञीषु कथमिदं जातम् ।

(ङ) **आत्रेयी** । ऋष्यशृंगाऽऽश्रमे गुरुजनस्तदाऽऽसीत् । सम्प्रति तु परिसमाप्तं तद् द्वादशवार्षिकं सत्रम् । ऋष्यशृङ्गेण सम्पूज्य विसर्जिताश्च गुरवः । ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्य परिशुद्धा वाचो यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

**वासन्ती** । अथ स राजा किमाचारः सम्प्रति ।

**आत्रेयी** । तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः ।

---

(क) सापवादं सनिन्दं ॥

(ख) दैवनिर्घातः दैवाज्जातः अशनिपातः तत्तुल्योऽयं आघातः । त्वद्वाक्यमिति भावः ॥

(ग) निर्माणभागः निर्माणस्य ब्रह्मकर्तृकस्य भागः अंशः ईदृशः एवं परिणतः । ब्रह्मणा तद्रूपं लोकोत्तरं सुन्दरं निर्मितं ततः काममोहितेन रावणेन त्वदपहारः कृतः तत्र अशोकवने चिरस्थितत्या जनापवादः तद्भीतेन रामेण त्वत्त्यागः । तत्सर्वन्तु ब्रह्मणैव मृष्टमिति । अहो अस्थाने निर्विवेकिता ब्रह्मण इति भावः । त्वया अलं । मत्सखीत्यागिना त्वया मम न कश्चिदपि उपयोगः इति भावः । प्रवृत्तिः वृत्तान्तः ॥

(घ) हा कष्टमिति प्रथमाङ्कोपक्षिप्तबीजोद्घाटनम् ॥

(ङ) ततो भगवतीत्यादि चतुर्थाङ्कबीजम् ॥

(क) वासन्ती । हा धिक् परिणीतमपि ।

(ख) आत्रेयी । शान्तं शान्तम् ।

वासन्ती । का तर्हि यज्ञे सहधर्मचारिणी ।

आत्रेयी । हिरण्मयी सीताप्रतिकृतिः ।

वासन्ती । हन्त भोः

(ग) वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ ७ ॥

(घ) आत्रेयी । विसृष्टश्च वामदेवानुमन्त्रितो मेध्योऽश्वः । उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुरवाप्तदिव्यास्त्रसंप्रदायस्साधनान्वितोऽनुप्रहितः ।

(ङ) वासन्ती । (सस्नेहकौतुकास्रम्) कुमारलक्ष्मणस्यापि पुत्रः । हन्त मातर्जीवामि ।

(च) आत्रेयी । अत्रान्तरे ब्राह्मणेन मृतं पुत्रमारोप्य राजद्वारि सोरस्ताडमब्रह्मण्यमुद्घोपितम् । ततो न राजापचारमन्तरेण प्रजायामका-

---

(क) न केवलं त्यक्ता परिणीतमपि विवाहोऽपि कृतः। यज्ञस्य पत्नीसाध्यतया विवाहं विना अश्वमेधाधिकाराऽभावात् इयं शङ्का ॥

(ख) शान्तम् । असम्भाव्यम् ॥

(ग) वज्रादिति । स्वकृतामपि अग्निशुद्धिमनपेक्ष्य प्राकृतजनकृतनिन्दामात्रेण त्यागस्य कृतत्वेन वज्रादपि कठोरत्वं । रावणकृतापहारे वृक्षं वृक्षं समालिंग्य अतिशोकस्य कृतत्वेन कुसुमादपि मृदुत्वं । लोकोत्तराणां लोकेभ्य उत्तरा श्रेष्ठाः तेषां व्यवस्थाऽभावात्र सर्वनामता महाजनानां। चेतांसि विज्ञातुं विशेषतो ज्ञातुं को नु । न कोऽपीत्यर्थः ॥ ७ ॥

(घ) वामदेवेन ऋषिणा अनुमन्त्रितः संस्कृतः मेध्यः पवित्रः अश्वमेधीयो वा । साधनान्वितः चतुरंगबलान्वितः । प्रहितः प्रस्थापितः ॥

(ङ) सस्नेहकौतुकास्रं । लक्ष्मणपुत्रवार्ताश्रवणेन स्नेहकौतुकानन्दाश्रूणि । जीवामि । सीतावार्तां श्रुत्वा मृतप्रायेवाऽभवं ततो लक्ष्मणपुत्रजन्मवार्तां श्रुत्वा पुनरागतप्राणेवाऽभवमिति भावः ॥

(च) सोरस्ताडं कृत्स्नमुरस्ताडयित्वा तत्सहितं । अब्रह्मण्यं अवध्योक्तिः । उद्घोपितं
—नां राज्ञः प्रजापालकस्य अपचारः धर्मव्यतिक्रमः तं अन्तरेण

ऽमृत्युश्चरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्

(क) शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥

(ख) इत्युपश्रुत्यैवाऽऽकृष्टकृपाणपाणिः पुष्पकं विमानमारुह्य सर्वादिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचरितुमारब्धवान् ।

(ग) वासन्ती । शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । तदपि नाम रामभद्रः पुनरपीदं वनमलंकुर्यात् ।

आत्रेयी । भद्रे गम्यतेऽधुना ।

(घ) वासन्ती । एवमस्तु कठोरीभूतस्तु दिवसः । तथाहि

(ङ) कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन संपातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम्

---

विना । 'अन्तरान्तरेणयुक्ते' इति द्वितीया । प्रजायां अकालमृत्युर्न चरतीत्यन्वयः । करुणामये करुणाप्रचुरे । प्राचुर्ये मयट् । अशरीरिणी वाक् उदचरत् आकाशवाणी प्रादुर्बभूव ॥

(क) तामेव आह--शम्बूक इति । शीर्षच्छेद्यः शिरश्छेदं अर्हति शीर्षच्छेद्यः । 'शीर्षच्छेदाद्यच्च' इति यत्प्रत्ययः शिरसः शीर्षादेशश्च निपात्यते ॥ ८ ॥

(ख) आकृष्टं कोशादुद्धृतं यत्कृपाणं असिः पाणौ यस्य सः ।

(ग) धूमपः धूमं पिबतीति धूमपः अधोमुखः । अलंकुर्यात् । सम्भावनायां लिङ् ॥

(घ) कठोरीभूतः मध्याह्नं प्राप्तः ॥

(ङ) कण्डूलेति । कूले तीरे । कुलायद्रुमाः कुलायानां नीडानां सम्बन्धिनो द्रुमाः 'कुलायो नीडमस्त्रियां' इत्यमरः । स्वकुसुमैः स्वीयैः पुष्पैः । गोदावरीं अर्चन्ति पूजयन्ति । कीदृशैः घर्मेण उष्णेन स्रंसितानि शिथिलीकृतानि बन्धनानि वृन्तानि येषां तैः । पुनः कीदृशैः कण्डूलाः कण्डूयुक्ताः द्विपानां गजानां गण्डा एव पिण्डाः तेषां यत्कषणं घर्षणं तेन यः उत्कृष्टः कम्पः तेन सम्पातिभिः पतनशीलैः । कीदृशाः द्रुमाः छायायां अपस्किरमाणाः नखैः आलिखन्तः 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति अपात्परस्य किरतेः सुट् । 'किरतेर्हर्षजीविके'--त्यादिना आत्मनेपदं शानच् । तथाविधाः ये विष्किराः पक्षिणः तैः मुखैः कृत्वा व्याकृष्टाः कीटा येभ्यः तथाविधास्त्वचो

छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

(क) (परिक्रम्य इति निष्क्रान्ते)

(ख) विष्कम्भकः ।

(ततः प्रविशति पुष्पकस्थः सदयोद्यतखड्गो रामः)

(ग) रामः । रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि दुर्वहगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते ॥ १० ॥

---

येषां ते । पुनः कीदृशाः कूजन्ति अव्यक्तं शब्दं कुर्वन्ति कान्तानि मनोहराणि कपोतानां पारावतानां कुक्कुटानां पक्षिविशेषाणां च कुलानि येषु ते तथा ॥ ९ ॥

(क) इति निष्क्रान्ते आत्रेयीवासन्त्यौ रंगमध्यान्नेपथ्यमध्यं गते ॥

(ख) विष्कम्भकः । तल्लक्षणन्तु दशरूपके 'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । विष्कम्भकस्तु विज्ञेयो मध्यपात्रप्रयोजितः' । येषामिति वृत्तं वर्णनीयं तानि उत्तमपात्राणि नीचानि चेट्यादीनि तदन्यानि मध्यमानि । विष्कम्भकः द्विविधः शुद्धो मिश्रश्च । संस्कृतभाषाप्रायः शुद्धः । संस्कृतप्राकृतभाषो मिश्रः । अयञ्च शुद्धो विष्कम्भकः ॥

(ग) रेहस्तेति । रे हस्त दक्षिण । रामगात्रत्वेन उत्तमत्वेऽपि मुनिवधरूपे नीचे कर्मणि प्रवृत्त्या रे इति नीचसम्बोधनं । दक्षिण इति सरलवाचिदक्षिणशब्दोपादानेऽपि विपरीतलक्षणया असरल इत्यर्थः । द्विजशिशोः जीवनाय शूद्रमुनेर्वधे प्रवृत्तः । द्विजस्य । जन्यजनकभावे षष्ठी । शिशोर्बालस्य । द्विजजन्यत्वेन बाल्येन तस्य जीवनाय तव वधे प्रवृत्तिरुचितैव । जीवातवे जीवनाय । 'जीवातुर्जीवनौषधं' इत्यमरः । तादर्थ्ये चतुर्थी । विसृज । विधौ लोट् । तदकरणानौचित्यं व्यज्यते । नन्वेकस्य वधेन अपरस्य जीवनमनुचितमत आह—रामस्येति । रामशब्देन अतिकठोरहृदयता । तया च अनुचितकारिता व्यज्यते । अनुचितकार्यकारितामाह—दुर्वहेति । दुर्वहेन पूर्णमासत्वेन दुःखेन वोढुं शक्येन गर्भेण खिन्ना खेदवती या सीता तस्याः प्रवासने पुनर्दर्शनयोग्ये प्रवासे । विवासनेति पाठोऽप्ययमेवार्थः । पटोः दक्षस्य रामस्य गात्रमसि । ते तव करुणा कुतः । अंगिनो रामस्य यद्येवं स्वभार्यायाः पूर्णगर्भायास्त्यागे कठोरता तर्हि तदंगस्य हस्तस्य तव करुणालेशोऽपि असम्भाव्य इति भावः । अतो मम सम्बन्धेन दक्षिणस्याऽपि अदाक्षिण्यमुचितमेवेति भावः ॥ १० ॥

(क) (कथंचित् प्रहृत्य) कृतं रामसदृशं कर्म । अपि जीवेत् स ब्राह्मणशिशुः ।

प्रविश्य

दिव्यपुरुषः । जयति जयति देवः ।

(ख) दत्ताभये त्वयि यमादपि दण्डधारे
सञ्जीवितः शिशुरयं मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

(ग) रामः । द्वयमपि प्रियं नः । तदनुभूयतामुग्रस्य तपसः फलम्

(घ) यत्रानन्दाश्च मोदाश्च यत्र पुण्याभिसम्भवाः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः ॥ १२ ॥

---

(क) कथंचित् दयया । रामसदृशं तत्तादृक् सीताविवासकरामसदृशं कर्म त्वया कृतं । अपि जीवेत् । सम्भावनायां लिङ् ॥

(ख) दत्ताभयइति । यमादपि अन्तकादपि दत्ताभये दत्तं अभयं येन तस्मिन् दिव्यत्वप्राप्त्या पुनरन्तकभयाभावात् । त्वयि दण्डधारे सति । पापकारिणो हि राजदण्डिताः शुद्ध्यन्ति इति आगमः । यमेन नीतस्य ब्राह्मणपुत्रस्य यमलोकादानीय सञ्जीवनेन यमादभयदातृत्वं । अयं शिशुः सञ्जीवितः । दिव्यत्वाज्ज्ञानदृष्ट्या जीवन्तं शिशुं प्रत्यक्षीकृत्य अयमिति निर्देशः । मम च शूद्रस्य परधर्मतपस्याकारिणः पापस्याऽपि इयं ऋद्धिः दिव्यरूपतापत्तिः अतः एव शम्बूकः तेचरणौ शिरसा नतः । अर्थान्तरं न्यस्यति । सत्संगजानि सतां संगाज्जातानि निधनान्यपि मरणान्यपि तारयन्ति । मम चेयमित्यत्र चकारोन्वाचये तथा च ब्राह्मणपुत्रजीवनाय मम हननमात्रोद्देशेऽपि आनुषङ्गिकी मम दिव्यरूपसम्पत् सम्पन्नेति अहो सत्संगमाहात्म्यं । अत एव सर्वोत्कर्षवाचकं जयति इति अत्यादरद्योतनाय वीप्सितं द्विःप्रयुक्तम् ॥ ११ ॥

(ग) इयं द्विजपुत्रजीवनं तव ऋद्धिश्च ॥

(घ) यत्रेति । पुण्यात् तपोजनितात् अभिसम्भवो येषां ते । आनन्दाः प्रियदर्शनानि सुखानि । यत्र येषु लोकेषु सन्ति । यत्र मोदाश्च प्रियलाभजन्यानि सुखानि च सन्ति । ते वैराजाः विराजः ब्रह्मण इमे तैजसाः तेजोमयाः शिवाः कल्याणरूपाः लोकाः ते तव सन्तु ॥ १२ ॥

(क) शम्बूकः । युष्मत्पादप्रसादोपाय एष महिमा किमत्र तपसः फलम् अथ वा महदुपकृतं तपसा

(ख) अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥ १३ ॥

(ग) रामः । किं नाम दण्डकेयम् (सर्वतोऽवलोक्य) आम्

(घ) स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थानेस्थाने मुखरककुभो झांकृतैर्निर्झराणाम् ।
एते तीर्थाऽऽश्रमगिरिसरिद्गर्भकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

---

(क) युष्मत्पादप्रसाद एव उपायः यस्य सः एषः महिमा महत्वं दिव्यदेहत्वादि । अत्र तपसः फलं किं । काकुरयं न किञ्चिदित्यर्थः । अथ वा इति पक्षान्तरे ॥

(ख) तदाह—**अन्वेष्टव्य इति** । भुवने जगति । भूतानां नाथः शरण्यः रक्षकः त्वं अन्वेष्टव्यः श्रवणमनननिदिध्यासनादिसाधनैः अवश्यं मार्गयितव्यः । सः त्वं इह दण्डकायां वृषलकं स्वधर्मत्यागेन परधर्मकरणेन कुत्सितं शूद्रं । कुत्सायां कन् । अन्विष्यन् मार्गयन् योजनानां शतानि क्रान्त्वा अतिक्रम्य प्राप्तोऽसि इति यत् । सः स्वप्राप्तिरूपः उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयन् सर्वनामक्रमेण तत्तल्लिंगभाग्भवति इति स इत्यस्य पुंस्त्वं । इह अस्मिन्विषये दण्डकायां । तपसां इति बहुवचनं अनेकतपःसाध्यत्वं भगवत्प्राप्ति दर्शयति । सम्प्रसादः अनुग्रहः । अन्यथा नो चेत् । अयोध्यायाः निष्क्रम्य । बलाहकाद्विद्योतते विद्युत् इतिवत् अपादाने पञ्चमी । दण्डकायां वने । वः युष्माकं पुनः उपगमः प्राप्तिः क्व । अत्यन्तासम्भावितेति भावः ॥ १३ ॥

(ग) आम् स्मरणे ॥

(घ) **स्निग्धेति** । क्वचिद्देशे स्निग्धाः जलेन स्नेहवन्तः आर्द्राः अत एव श्यामा हरिततृणादिमन्तः । अपरतः अन्यप्रदेशे । सार्वविभक्तिकः तसिः । भीषणाभोगरूक्षाः भीषणः भयङ्करः आभोगः पूर्णता येषां ते अत एव रूक्षाः कर्कशाः दुर्दर्शा इति यावत् । स्थाने तत्तत्प्रदेशे निर्झराणां गिरिप्रवाहाणां झांकृतैः झां झां इत्याकारैः शब्दैः मुखराः नादिताः ककुभो दिशो यैः । तीर्थानि ऋषिजुष्टजलानि आश्रमा ऋषिवसतयः गिरयः पर्वताः सरितश्च गर्भभूतानि कान्ताराणि च दुर्गमवर्त्मानि च तैः मिश्राः परिचिताः भुवो येषु ते दण्डकारण्यभागाः एते सन्दृश्यन्ते ॥ १४ ॥

शम्बूकः । दण्डकैवेयमत्र किल पूर्वं निवसता देवेन

चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

(क) येन सिद्धिक्षेत्रेऽस्मिञ्जनस्थाने मादृशानामपि भीरुजनानामकुतोभयः सञ्चारो जातः ।

रामः । न केवलं दण्डकेयं किन्तु जनस्थानमपि ।

(ख) शम्बूकः । बाढम् । एतानि खलु सर्वभूतलोमहर्षणान्युन्मत्तचण्डश्वापदकुलसंकुलगिरिगह्वराणि जनस्थानपर्यन्तानि दीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते ।

तथाहि

(ग) निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्डसत्वस्वनाः
स्वेच्छासुप्तगभीरघोरभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

---

(क) सिद्धिक्षेत्रे स्वस्य तपस्सिद्धिलाभाज्जनस्थानस्य सिद्धिक्षेत्रत्वं । अकुतोभयः नास्तिकुतोभयं यस्य सः । मयूरव्यंसकादित्वात्समासः ॥

(ख) सर्वभूतलोमहर्षणानि सर्वेषां भूतानां भयङ्करत्वेन लोमहर्षणानि रोमाञ्चकारीणि । उन्मत्ताश्चण्डा आतिकोपना ये श्वापदाः शुनः पदानीव पदानि येषान्ते श्वापदाः । 'शुनो दन्तदंष्ट्रे'—त्यादिना श्वन्शब्दस्य दीर्घः । आरण्यकाः पशवः तेषां कुलानि सजातीयसमूहाः तैः संकुलानि व्याप्तानि । जनस्थानपर्यन्तदीर्घारण्यानि जनस्थानस्य नासिकस्य पर्यन्तेषु परिसरभूषु स्थितानि दीर्घाणि अरण्यानि दक्षिणां दिशं अभिवर्तन्ते आक्रमन्ति । अत एव तेषां दीर्घत्वम् ॥

(ग) निष्कूजेति । ताः सीमानः पर्यन्तभूमयः सन्ति । 'सीमसीमे स्त्रियामुभे' इत्यमरः । यासु सीमासु । अयं अजगराणां स्वेदस्य घर्माम्बुनः द्रवः निष्यन्दः । तृष्यद्भिः जलं अभिलषद्भिः प्रतिसूर्यकैः सरटैः । 'सरटः कृकलासस्स्यात्प्रतिसूर्यशयानकौ' इति हलायुधः । स्वार्थेकन् । पीयते आचाम्यते । कीदृश्यः सीमानः क्वचित्कस्मिंश्चिद्देशे । निष्कूजं कूजनाभावः । अर्थाभावेऽव्ययीभावः अर्थात्पक्षिणां शब्दाभावः तेन स्तिमिताः मूका इव । क्वचिदपि प्रकर्षेण उच्चण्डाः अतिशयिताः सत्वानां सिंहादीनां स्वना यासु ताः । प्रदेशान्तरे स्वेच्छया सुप्ताः गभीरं यथा तथा घोराः घोरन्तः । घुरतेः पचाद्यच् ।

(क) रामः । **पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।**
**प्रत्यक्षानिव वृत्तान्तान् पूर्वाननुभवामि च ॥ १७ ॥**

( सर्वतोऽवलोक्य )

(ख) प्रियारामा हि सर्वथा वैदेह्यासीत् । एतानि तानि नाम कान्ताराणि । किमतःपरं भयानकस्य । ( सास्रम् )

(ग) **त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु ।**
**इतीवारमतीवासौ स्नेहस्तस्याः स तादृशः ॥ १८ ॥**

(घ) **अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।**
**ततस्य किमपि द्रव्यं योहि यस्य प्रियोजनः ॥ १९ ॥**

---

ये भुजगाः सर्पाः तेषां श्वासैः प्रदीप्ताः अग्नयो यासु । प्रदरोदरेषु प्रदराणां गर्तानां उदरेषु गर्भेषु । विलसन्ति स्वल्पानि अम्भांसि जलानि यासु ताः । 'प्रदरं स्त्री रुजाभेदे प्रदरः श्वभ्रभीतयोः' इति विश्वः ॥ १६ ॥

(क) **पश्यामीति** । पूर्वं भूतो भूतपूर्वः । 'सुपा' इति समासः । खरस्य तन्नाम्नो राक्षसस्य आलयं स्थानं । यद्वा खरः आलीयते नाश्यते यस्मिन् ॥ १७ ॥

(ख) प्रियारामा प्रियः आरामः आरमणं यस्याः सा । एतानि तानि । येषु प्रियया सह उषित्वा चिरतरं सुखमनुभूतं । अतः आभ्यः दण्डकाभ्यः परमन्यत् । भयानकस्य उदाहरणं कि भवेत् इत्यर्थः ॥

सास्रं । सीतास्मृत्या शोकः ॥

(ग) **त्वयेति** । अहं त्वया सह मधुगन्धिषु मधुनः गन्धः स विद्यते येषु तेषु । इन्नन्तमेतत् । वनेषु निवत्स्यामि वासङ्करिष्यामि । इति इव इवशब्दः एवमर्थकः । इत्येवं । एवमर्थक शब्दप्रयोगेणाऽपि असौ सीता आरमतीव क्रीडां करोतीव । 'व्याङ्परिभ्यो रमः' इति परस्मैपदं । निवत्स्यामीति भविष्यदर्थलृट्प्रयोगेण सहवासरूपकारणस्योत्तरकालभावित्वं आरमतीति वर्तमानार्थकलट्प्रयोगेण क्रीडारूपकार्यस्य पूर्वकालभावित्वं । तेन अतिशयोक्तिः । 'कार्यकारणयोर्यश्च पौर्वापर्यव्यतिक्रमः । विज्ञेयोऽतिशयोक्तिः से'—ति तल्लक्षणात् । स तस्याः स्नेहः तादृशः अनिर्वाच्यः । न तु ईदृश इत्याकारकशब्दवाच्यः ॥ १८ ॥

(घ) अकिञ्चिदिति । यो हि यस्य जनः प्रियः स्निग्धः तत्तस्य किमपि अनिर्वचनीयं द्रव्यं वस्तु । अकिञ्चिदपि किञ्चित्प्रियं अकुर्वाणोऽपि सौख्यैः सन्निधिमात्रेण जनितैः सौख्यैः दुःखानि अपोहति निराकरोति ॥ १९ ॥

(क) शम्बूकः । तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्वतैरविरलनिविष्टनीलबहलच्छायतरुणतरुषण्डमण्डितान्यसंभ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगभीराणि मध्यमारण्यानि

(ख) इह समदशकुन्ताक्रान्तवानीरवीरुत्
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

( अपिच )

(ग) दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते शल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

---

(क) अथ मदेन कलानां मधुरं कूजतां मयूराणां कण्ठानां कोमला छविरिव छविः दीप्तिर्येषां तैः पर्वतैः । कूजनकाले हि मयूरकण्ठानां स्निग्धत्वं पर्वतानाञ्च तृणगुल्माद्यावृतत्वेन छविसम्पत्तिः । अवकीर्णानि व्याप्तानि । अविरलं निविष्टा नीला बहला छाया येषां तेषां तरुणानां तरूणां षण्डैः संघातैः मण्डितानि । व्याधादिसञ्चाराभावेन असम्भ्रान्तानि निर्भयानि मृगयूथानि येषु तानि। प्रशान्तानि निरुपद्रवाणि गभीराणि च मध्यमारण्यानि ॥

(ख) इहेति । इह मध्यमारण्येषु । समदैः मत्तैः शकुन्तैः पक्षिभिः आक्रान्ताः याः वानीरवीरुधः वेतसलताः तासां ये प्रसवाः पुष्पफलानि तैः सुरभीणि सुगन्धीनि शीतानि स्वच्छानि तोयानि यासां ताः । फलभरेण फलातिशयेन परिणामः नमनं यासां ताः। यद्वा फलभराणां परिणामः परिपाकः तेन श्यामाः जम्ब्वः तासां निकुञ्जाः तेषु यत्स्खलनं वेगप्रतिघातः तेन मुखराणि सशब्दानि भूरीणि स्रोतांसि यासां ताः । निर्झरिण्यः नद्यः वहन्ति स्यन्दन्ते । अर्थान्तरवृत्तित्वेन वहतेरकर्मकत्वम् ॥ २० ॥

(ग) दधतीति । अत्र अस्मिन्प्रदेशे । कुहरं बिलं भजन्ति तेषां तथाविधानां। भल्लूका ऋक्षाः ते युवानः तरुणाः तेषां । विशेषणविशेष्यत्वे कामचारादेवं प्रयोगः । अनुरसितेन प्रतिध्वनिना गुरूणि बहुलानि अम्बूकृतानि सनिष्ठीवनानि वचनानि स्त्यानं घनत्वं दधति । शल्लकीनां गजभक्ष्याणां ओषधीनां शिशिरः शीतलः कटुः तीक्ष्णः

**रामः ।** (सबाष्पस्तम्भम्) भद्र शिवास्ते पन्थानो देवयानं प्रतिपद्यस्व पुण्येभ्यो लोकेभ्यः ।

**शम्बूक ।** यावत् पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि ।

(इति निष्क्रांतः)

(क) **रामः ।** **एतत्तदेव हि पुनर्वनमद्य दृष्टं**
**यस्मिन्नभूम चिरमेव पुरा वसन्तः ।**
**आरण्यकाश्च गृहिणश्च रताः स्वधर्मे**
**सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥**

(अपिच)

(ख) **एते त एव गिरयो विरुवन्मयूरा-**
**स्तान्येव मत्तहरिणानि वनस्थलानि ।**
**आमञ्जुवञ्जुललतानि च तान्यमूनि**
**नीरन्ध्रनीलनिचुलानि सरित्तटानि ॥ २३ ॥**

---

कषायः निर्यासः । स्त्यायते घनो भवति । कीदृशः इभैः गजैः दलिताः विदारिताः विकीर्णाः इतस्ततः पर्यस्ताः ये ग्रन्थयः तेषां यो निष्पन्दः रसक्षरणं तस्य गन्धः आमोदः सम्बन्धो वा यस्मिन्सः । 'अथ कुहरं सुषिरं विवरं बिलं' इति 'अम्बूकृतं सनिष्ठीवं' इति चाऽमरः । 'स्त्यानं स्निग्धे प्रतिध्वाने घनत्वाऽऽलस्ययोरपि' इति 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' 'इति च विश्वः ॥ २१ ॥

(क) **एतदिति** । यस्मिन् वने । चिरमेव बहुकालमेव । वसन्तः निवसन्तः वयं त्रयः सीता लक्ष्मणः अहं च । स्वधर्मे वानप्रस्थोचिते धर्मे । रताः तत्पराः सांसारिकेषु संसारजन्यसुखेषु च रसज्ञाः आस्वादज्ञाः आरण्यकाश्च गृहिणश्च अभूम । पितुराज्ञापालनमिषेण वनं प्रविष्टानामस्माकं आश्रमद्वयधर्मानुष्ठानं युगपदेव सम्पन्नमिति द्योतयितुं चकारद्वयम् । पुनः अद्य दृष्टं एतद्वनं तदेव ॥ २२ ॥

(ख) एते इति । एते समीपतराः गिरय ते एव पूर्वानुभूता एव । कीदृशाः विरुवन्तः विशेषेण कूजन्तः मयूरा येषु ते । मत्ता हरिणा येषु तानि वनस्थलानि तान्येव । आसमन्तात् मञ्जवः मनोज्ञाः 'मनोज्ञं मञ्जु मञ्जुलं' इत्यमरः । वञ्जुलाः अशोकाः वेतसा वा तिनिशाः वा 'वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि' इति मेदिनी ।

(क) मेघमालेव यश्चायमारादपि विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥ २४ ॥

(ख) अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥

(ग) तदत्रैव सा पञ्चवटी यत्रातिचिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी वासन्तीनामवनदेवता च प्रतिवसति । तत् किमिदमापतितमद्य रामहतकस्य । सम्प्रति हि

(घ) चिरोद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित् संवेगात्प्रचलित इव शल्यस्य शकलः ।

---

लताश्च येषु तानि । नीरन्ध्राः अविरलाः नीलाः सलिलप्रदेशवर्तित्वेन अतिसरसपत्रवतया श्यामाः निचुलाः हिज्जलाख्यवृक्षा येषु तानि अमूनि सरित्तटानि । तान्येव बहुशोऽनुभूतानि ॥ २३ ॥

(क) मेघमालेति । आरादपि दूरादपि । 'आराद्दूरसमीपयोः' इत्यमरः । विभाव्यते लक्ष्यते । अत्युन्नतत्वात् ॥ २४ ॥

(ख) अस्यैवेति । अस्यैव प्रस्रवणस्यैव । महति अत्युच्चे विशाले च शिखरे । गृध्रराजस्य जटायुषः । वासः स्थितिः । आसीत् । तस्य शिखरस्य । अधस्तात् अधः प्रदेशे । अस्तातिप्रत्ययान्तं अव्ययं । तेषु पूर्वानुभूतेषु पर्णोटजेषु पर्णशालासु वयमपि रताः उषिताः । विनताः पुष्पफलादिभारेण अतिनम्राः श्यामलाः नीलाः अनोकहाः वृक्षाः तेषां श्रीर्यस्मिन्नतथाविधः । अन्तः अभ्यन्तरे कूजन्तः अव्यक्तं वदन्तः मुखराः चपलाः शकुना यस्मिन् सः वनान्तः । गोदावर्याः पयसि । लक्षणया तीरे यत्र प्रस्रवण आसीत् ॥ २५ ॥

(ग) तत् ततो हेतोः । अत्रैव सा अनुभूता पञ्चवटी । यत्र यस्यां पञ्चवटयां । अतिचिरं बहुकालं निवासेन । विविधानां बहुविधानां विस्रम्भाणां विश्वस्तविहाराणां अतिप्रसंगस्य अतिविस्तारस्य साक्षिणः प्रदेशाः ताः ताः भूमयः सन्ति ॥

(घ) चिर इति । चिरं बहुकालानन्तरं उद्वेगं चित्तदाहं आरभतेऽसौ । इदं विशेषणं देहलीदीपन्यायेन उत्तरेषु सर्वेषु वाक्येषु अन्वेति । तीव्रः अत्युग्रः विषरसः हालाहलादिरसः प्रसृत इव सर्वावयवेषु व्याप्त इव । कुतश्चिदपि कस्मादपि स्थानादागत्य ।

**व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुन-**
**र्घनीभूतः शोको विकलयति मां मूर्च्छयति च ॥ २६ ॥**

(क) तथापि तान् पूर्वसुहृदो भूमिभागान् पश्यामि । (निरूप्य) अहो! अनवस्थितो भूमिसन्निवेशः ।

(ख) **पुरा यत्र स्रोतः पुलिनमभवत् तत्र सरितां**
**विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।**
**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**
**निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥**

(ग) हन्त परिहरन्तमपि मामितः पञ्चवटीस्नेहो बलादाकर्षतीव । (सकरुणम्)

(घ) **यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे**
**यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत ।**

---

संवेगात् भूरिवगात् । शल्यस्य बाणाग्रस्य शकलः खण्डः निहित इव हृदये रोपित इव । रूढः विरूढः ग्रन्थिर्यस्य सः व्रणः । हृन्मर्मणि हृदयस्य मर्मणि जीवस्थाने पुनः स्फुटित इव । उपमात्रयेण कालान्तरेऽपि बाधकत्वं द्योत्यते । घनीभूतः पूर्वं अघनोऽपि घनत्वमापन्नः शोकः पञ्चवटयादिउद्दीपकविभाववशात् नूतन इव मां विकलयति सम्मूर्च्छयति च मोहयति च ॥ २६ ॥

(क) तथाऽपि एवं मोहसम्भावनायामपि । भूमिभागेषु सुहृत्वं अत्यन्तोपकारकत्वेन गौणं । अनवस्थितः विपर्यस्तः अवस्थान्तरं प्राप्तः ॥

(ख) तदेव आह—**पुरेति** । बहोः कालात् चिरकालानन्तरं दृष्टं वनं अपरमिव अन्यदिव मन्ये । परंतु शैलानां सन्निवेशः तदिदमेव इति बुद्धिं द्रढयति दृढां करोति । दृढशब्दात्करोत्यर्थे णिचि लटि टिलोपरभावौ । पुरा यत्र प्रदेशे सरितां स्रोतः प्रवाहः । तत्र प्रदेशे तोयाभावात् पुलिनं अभवत् आविरासीत् । क्षितिरुहां वृक्षाणां घनविरलभावः सान्द्रत्वविरलत्वे । विपर्यासं वैपरीत्यं प्राप्तः । अनेन हि वनवर्णन-वृत्तान्तेन नागरिककुटुम्बिवृत्तान्तः प्रतीयते इति इयं समासोक्तिः ॥ २७ ॥

(ग) परिहरन्तमपि तद्दर्शनं त्यक्तुमनसमपि ॥

(घ) **यस्यामिति** । यस्यां पञ्चवटयां ते प्रतिक्षणं विलक्षणसुखैरनुभूता दिवसाः । तया लोकोत्तरप्रियतमया सीतया सह मया नीताः । यथा गृहे स्वे । यस्याः साहित्येन

एकः संप्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥ २८ ॥

(प्रविश्य)

(क) शम्बूकः । जयतु जयतु देवः । देव भगवानगस्त्यो मत्तः श्रुतभवत्सन्निधानस्त्वामाह परिकल्पितविमानावतरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा सर्वे चाऽऽगस्त्यायनास्तदेहि संभावयास्मान् । अथ प्रजविना पुष्पकेण स्वदेशमुपगम्याश्वमेधाय सज्जो भविष्यसीति ।

रामः । यथाऽऽज्ञापयति भगवान् ।

शम्बूकः । इतस्तर्हि देवः प्रवर्तयतु पुष्पकम् ।

(ख) रामः । भगवति पञ्चवटि गुरुजनोपरोधात् क्षणं क्षम्यतामतिक्रमो रामस्य ।

शम्बूकः । देव पश्य पश्य

---

[illegible]शिष्टं सुखमनुभूतं । दीर्घा[illegible] अतिविस्तृताभिः आस्थीयत स्थितं । [illegible] स्वे गृहे इति मध्यमणिन्यायेन सम्बध्यते । वनादागत्य अयोध्यायां स्वे गृहे [illegible] पञ्चवटीकथा एवाऽकार्षमिति भावः । सम्प्रति अधुना एकः [illegible] । [illegible]शिता नाशं प्रापिता [illegible] लक्ष्मणहस्तेन अरण्ये त्यक्तत्वात् प्रियतमा येन [illegible] । अत एव शास्त्रफलं प्रयोक्तरीति न्यायेन पापः पापफलदुःखानुभववान् । [illegible] वा विलोकयतु । तद्दर्शनेनाऽतीवदुःखशोकमोहाकुलत्वसम्भवात् [illegible] असंभाव्य अनादृत्य । कथंवा गच्छतु । पूर्वसुहृदां भूमिभागानामनादरणं [illegible] प्रतीतिभावः ॥ २८ ॥

(क) श्रुतं भवतः सन्निधानं सामीप्यं येन सः । परिकल्पितं अनुष्ठितं विमानात् अवतरणकाले उचितं मंगलं यया सा । वत्सला स्नेहवती लोपामुद्रा तत्पत्नी । आगस्त्यायनाः अगस्त्यगोत्रापत्यानि । अगस्त्यशब्दात् 'नडादिभ्यश्च' इति फक् । सम्भावय सत्कुरु । प्रजविना वेगवता ॥

(ख) गुरुजनोपरोधात् गुरुजनानां अगस्त्यादीनां उपरोधात् आज्ञापालनरूपात् प्रतिबन्धात् अतिक्रमः उचिताचारं विना अतिक्रम्य गमनं ॥

(क) गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ २९ ॥

(अपिच)

(ख) एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः ।

---

(क) गुञ्जदिति । अयं गिरिः क्रौञ्चावतः तन्नामा । हे देव पश्य पश्येति पूर्वेण सम्बन्धः । तं विशिनष्टि । गुञ्जदिति गुञ्जन्तः अव्यक्तं स्वनन्तः कुञ्जरूपेषु कुटीरेषु अल्पासु कुटीषु 'कुटीशमीशुण्डाभ्यो रः' इति अल्पार्थे र प्रत्ययः । कौशिकाः घूकाः 'महेन्द्रगुग्गुलोलूकव्यालग्राहिषु कौशिकः' इति नानार्थेऽमरः । तेषां घटाः समूहाः तासां ये घूत्काराः घूत्घूत्इति शब्दाः ते विद्यन्ते येषु ते कीचकाः सच्छिद्रा वेणवः तेषां स्तम्बाः गुल्माः 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति । 'अप्रकाण्डे स्तम्बगुल्मौ' इति चाऽमरः । तेषां आडम्बराः शब्दविशेषाः तैः कृत्वा मूकानि निश्शब्दानि मौकुलीनां कृष्णकाकानां कुलानि समूहाः यस्मिन् स तथा । 'काकोलो मौकुलिर्द्रोणः कृष्णकाको वनाश्रयः' इति हलायुधः । एतस्मिन् प्रचलतां इतस्ततो गच्छतां प्रचलाकिनां प्रचलाकः शिखण्डः स येषामस्तिते प्रचलाकिनो मयूराः । 'प्रचलाकः शिखण्डश्च' इति । 'केकी शिखी शिखण्डी प्रचलाकी बर्हिणः कलापी च' इति च हलायुधः । कूजितैः शब्दैः उद्वेजिताः भीताः कुम्भीनसाः सर्पाः । 'कुम्भीनसो विषज्वालाकुलदृष्टिभुजंगमे' इति विश्वः । पुराणानां जीर्णानां रोहिणतरूणां चन्दनानां स्कन्धेषु । सौगन्ध्यातिशयद्योतनाय पुराणेति । 'रोहिणश्चन्दनद्रुमः' इति हारावली । उद्वेल्लन्ति इतस्ततश्चलन्ति । न तु तांस्त्यक्त्वाऽन्यत्र पलायन्ते इति भावः । मृत्युभयमप्यगणयित्वा विषयविशेषाऽऽकृष्टा नाऽन्यत्र गच्छन्तीति ध्वनिः । अत्र बर्हिकूजितजन्योद्वेगरूपकारणसत्वेऽपि पलायनरूपकार्यस्याऽभावाद्विशेषोक्तिरलंकारः ॥ २९ ॥

(ख) एते इति । कुहरेषु बिलेषु गद्गदं अव्यक्तं यथा तथा नदन्ति शब्दं कुर्वन्ति गोदावरीवारीणि येषु ते तथा । मेघैरभ्रैः आलंम्बितमौलीनि आक्रान्तपरभागानि अत एव नीलानि शिखराणि येषान्ते तथा । दक्षिणाः दक्षिणदिगवस्थिताः एते क्षोणीभृतः गिरयः ते पूर्वानुभूता एव सन्ति । इमे गभीराणि दुर्विगाहानि पयांसि येषां ते पुण्याः सरित्संगमाः त एव सन्ति । कीदृशाः अन्योन्येषां परस्परेषां प्रतिघातेन प्रतिरोधेन संकुलं चलन्तो ये कल्लोलाः महातरंगास्तेषां कोलाहलैः उपलक्षिताः ।

अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥ ३० ॥

( निष्क्रान्तौ )

पञ्चवटी प्रवेशो नाम

द्वितीयोऽङ्कः ।

---

'इत्थम्भूतलक्षणे' इति तृतीया । पुनः कीदृशाः उत्तालाः त्वरिताः 'उत्तालस्त्वरितो ज्ञेयः' इति हलायुधः । वेगवन्तः इत्यर्थः ॥

इति भावभूतार्थबोधिकायां पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ॥ २ ॥

( ततः प्रविशति नदीद्वयं तमसा मुरला च )

**तमसा ।** सखि मुरले किमसि संभ्रान्तेव ।

(क) **मुरला ।** भगवति तमसे प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुं जानास्येव यथा वधूत्यागात् प्रभृति

(ख) **अनिर्भिन्नगभीरत्वादन्तर्गूढघनव्यथः ।**
**पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥**

(ग) तेनच तथाविधेष्टजनकष्टविनिपातजन्मना प्रकर्षगतेन दीर्घशोकसन्तापेन संप्रत्यतितरां परिक्षीणो रामभद्रस्तमवलोक्य कम्पितमिव मे हृदयम् । अधुना च प्रतिनिवर्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहवासविश्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः । तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात् पदेपदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य । तद्भगवति गोदावरि तत्र त्वया सावधानया भवितव्यम् ।

---

(क) अभिधातुं वक्तुं । प्रेषिताऽस्मि इति सम्बन्धः । वधूत्यागात् सीतात्यागात् प्रभृति । प्रभृत्यर्थयोगे पञ्चमी ॥

(ख) **अनिर्भिन्नेति ।** रामस्य करुणः रसः यथा त्वं जानास्येवेति सम्बन्धः । [illegible] अनिर्भिन्नश्चासौ गभीरश्च । अन्यान्सुहृदः प्रति अकथनात् अनिर्भिन्नत्वात् गाम्भीर्याच्च । अन्तः अभ्यन्तरे गूढा घना निविडा व्यथा यस्य । पुटपाकप्रतीकाशः पुटपाकस्य बहिर्मृदादिभिर्लिप्तस्य अन्तस्थस्य कूष्माण्डस्य पाकः तत्तुल्यः अस्ति । [illegible] सह्यवेदनं भवतीति अभिज्ञानशाकुन्तलोक्तन्यायेन अत्र तदभावाद्गाम्भीर्यातिशयाच्च धीरोदात्ततया अन्यान्प्रति अवेद्यमानः पुटपाकवदन्तरेव पापच्यते इति भावः ॥ १ ॥

(ग) तथाविधस्य लोकोत्तरप्रियस्य इष्टजनस्य सीतारूपस्य यत्कष्टं तस्य विनिपातः संघट्टनं तस्माज्जन्म यस्य सः तेन । प्रकर्षं अतिशयं गतेन प्राप्तेन दीर्घेन निरवधिना शोकाज्जातेन सन्तापेन । सन्तानेनेति पाठे शोकसन्तानेन परम्परया । अतितरां अत्यन्तं शम्बूकवधादिति शेषः । अयोध्यायाः प्रतिनिवर्तमानेन । वध्वाः सीतायाः सहनिवासस्य विश्रम्भस्य स्वच्छन्दविहारस्य च साक्षिणः । एतेन तेषां अतितरशोकोद्दीपकत्वं निसर्गात्स्वभावादेव धीरस्य । एवंविधायां अवस्थायां सीताविरहदशायां । अतिगम्भीरः

(क) वीचीवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहेमोहे रामभद्रस्य जीवं
स्वैरंस्वैरं प्रेषितैस्तर्पयेति ॥ २ ॥

(ख) **तमसा ।** उचितमेव दाक्षिण्यं स्नेहस्य । संजीवनोपायस्तु मौलिक एव रामभद्रस्याद्य सन्निहितः ।

**मुरला ।** कथमिव ।

(ग) **तमसा ।** श्रूयताम् । पुरा किल वाल्मीकितपोवनोपकण्ठात् परित्यज्य गते लक्ष्मणे सीता देवी प्राप्तप्रसववेदनात्मानमतिदुःखसंवेगाद्गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं प्रसूता । भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात् परेण च तद्दारकद्वयं तस्याः प्राचेतसस्य महर्षेर्गङ्गादेवी स्वयमर्पितवती ।

**मुरला ।** (सविस्मयम्)

---

अतिगूढतया दुःसहः आभोगः प्रसरो यस्य तेन शोकेन यः क्षोभः मर्मघातः तस्य संवेगात् अतिवेगात् प्रमादस्य अनवधानतायाः कर्तव्याकर्तव्यबुद्धिविपर्ययरूपायाः स्थानानि ॥

(क) सावधानत्वमेवाऽऽह—वीचीति । शीकराणां अम्बुकणानां क्षोदाश्चूर्णानि तैः शीतैः । पद्मानां किञ्जल्कानां केसराणां गन्धान् आकर्षद्भिः । तेन सौगन्ध्यं सूच्यते । वीचीनां तरङ्गाणां जनकैः वातैः । अनेन मान्द्यं सूच्यते । स्वैरंस्वैरं यथेच्छं प्रेषितैः । रामभद्रस्य मोहेमोहे प्रतिमोहावस्थं । त्वं जीवं तर्पयेति अभिधातुं लोपामुद्रया गोदावरीं प्रति प्रेषिताऽस्मि इति पूर्वेण सम्बन्धः ॥

(ख) दाक्षिण्यं अनुकूलकारित्वं । स्नेहस्योचितमेव । मौलिकः मूलादागतः । रामभद्रस्य यत् शोकस्य मूलं सीतारूपं तदेवाद्य शोकापनोदकारणं भविष्यतीति भावः ॥

(ग) श्रूयतामिति । इदं वृत्तकथासूचनं विष्कम्भकाङ्गं । उपकण्ठात् समीपात् । प्राप्ता प्रसववेदना यस्याः सा । अभ्युपपन्ना अनुगृहीता । 'अभ्युपपत्तिरनुग्रहः' इत्यमरः । नीता चेत्यन्वयः । स्तन्यत्यागात् परेणच । एनबन्तं अव्ययं । एतद्योगे 'एनपाद्वितीया' इति द्वितीयाविधानात्पञ्चमी अयुक्तेति भाति । प्राचेतसस्य वाल्मीकेः ॥

(क) **ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।**
**यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥**

(ख) **तमसा ।** इदानीं तु शम्बूकवधवृत्तान्तेनानेन संभावितजनस्थानगमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदेव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता ।

(ग) **मुरला ।** सुविचिन्तितं भगवत्या भागीरथ्या । राजधानीस्थितस्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्यैर्व्याप्तस्य रामभद्रस्य नियताश्चित्तविक्षेपाः । अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति । तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात् ।

(घ) **तमसा ।** उक्तमद्य भगवत्या भागीरथीदेव्या वत्से देवयजनसंभवे सीते अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशजन्मसंवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते । तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य

---

(क) **ईदृशानामिति** । ईदृशानां अतिशुद्धचरितानां विपाकोऽपि दशाविपर्यासोऽपि परमाद्भुतो जायते । मरणनिश्चयेन गङ्गापातेऽपि तदभावाज्जले प्रसूतावपि सीताया बालकद्वयस्य च अक्षत्या परमाद्भुतत्वं । यत्र विपाके एवंविधः गङ्गादरूपः उपकरणीभावं आयाति सहायत्वं उपकारकर्तृत्वं वा प्राप्नोति ॥ ३ ॥

(ख) संम्भावितं आशङ्कितं जनस्थानगमनं यस्य तं । यदेव राममूर्छत्वादि । तदेव राममूर्च्छादि । गृहाचारव्यपदेशेन बहुकालेन मित्रदर्शनादिमिषेण ॥

(ग) आभ्युदयिकैः अभ्युदयजनकैः धर्मार्थकामसम्बन्धिभिः व्यापृतस्य सव्यापारस्य नियताः निरुद्धप्रसराः वशीकृताः । अव्यग्रस्य व्यापारान्तररहितस्य । शोकमात्रद्वितीयस्य शोक एव द्वितीयः साहाय्यो यस्य असहायस्य शोचतः । अद्य न हि कश्चिद्वितीयः शोचितुः सान्त्वयितेति भावः । अनर्थः अनर्थकारणं । जन्यजनकभावसम्बन्धे लक्षणा आयुर्घृत मितिवत् तेन च पञ्चवटीप्रवेशस्य अत्यन्तानर्थाव्यभिचारिकारणत्वं सूच्यते । इति अस्य सुविचिन्तितं इत्यनेन सम्बन्धः कथं केन प्रकारेण ॥

(घ) तमेवाऽह—उक्तमित्यादि । उक्तिमेवाह–वत्सेत्यादि उपतिष्ठस्वेत्यन्तेन । संख्यामङ्गलग्रन्थिः मङ्गलार्थो ग्रन्थिः मङ्गलग्रन्थिः संख्याबोधको मङ्गलग्रन्थिरिति । शाकपार्थिवादित्वात्समास उत्तरपदलोपश्च। बालजन्मवर्षदिने सूत्रे एको ग्रंथिर्वर्षगणनाय बध्यत इत्याचारः । बालहस्ते बध्यत इति व्याख्यानं भ्रममूलमेव । अभिवर्तते इति पाठः । अभिपद्यते इति पाठे सूत्रे इति शेषः । पुराणं पुरातनं श्वशुरं कुलप्रवर्तकत्वात् । तदेवाऽह—मानवस्येति । वैवस्वतमनुप्रसृतस्येत्यर्थः । प्रसवितारं उत्पादितारं अप-

प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व । न च त्वामवनितलपृष्ठचारिणीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्या इति । अहं च ज्ञापिता तमसे त्वयि प्रकृष्टप्रेमैव वधूर्वत्सा जानकीति अतस्त्वमेवास्याः प्रत्यनन्तरीभवेति । साहमधुना यथादिष्टमनुतिष्ठामि ।

मुरला । अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि । रामभद्रोऽप्यागत एवेति तर्कयामि ।

(क) तमसा । तदियं गोदावरीह्रदान्निष्क्रम्य

(ख) परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

(ग) मुरला । इयं हि सा ।

(घ) किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।

---

हतपाप्मानं अपहतः पाप्मा येन तं । अवचितैः संगृहीतैः । ज्ञापिता बोधिता । तदाऽऽह—तमसेति । प्रत्यनन्तरीभव सन्निहिता भव । यथादिष्टं आदिष्टं आज्ञापितं वचनमनतिक्रम्य ॥

(क) ह्रदात् अगाधजलात् ॥

(ख) परीति । तीव्रतरविरहेण परितः पाण्डू श्वेतौ दुर्बलौ कृशौ कपोलौ गण्डौ यस्मिन् तत् तथाऽपि सुन्दरं । विलोलकबरीकं तथा प्रोषितभर्तृकात्वेन अभ्यङ्गादिकेशसंस्काराभावात् विलोला कबरी केशवेशो यस्याः । 'नद्यृतश्च' इति कप् । 'न कपि' इति ह्रस्वनिषेधः । करुणस्य तदाख्यरसस्य मूर्तिरिव काय इव । अथ वा शरीरिणी विरहव्यथेव । इमे वस्तूत्प्रेक्षे ॥ ४ ॥

(ग) इयं हि सा इयमेव सा । कथञ्चित्कष्टात्प्रत्यभिज्ञायते इति भावः ॥

(घ) किसलयेति । दारुणः अतिभीषणः दीर्घः दुरन्तः शोकः । मुग्धं सुन्दरं बन्धनात् वृन्तात् । विप्रलूनं अतिम्लानतासूचकं उपसर्गद्वयं । किसलयं नवपल्लवमिव परिपाण्डु प्रियतमाविरहेण परितः पाण्डुतामापन्नं क्षामं कृशतरं अस्याः शरीरं ग्लपयति

ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( परिक्रम्य निष्क्रान्तौ

(क) विष्कम्भकः ।

( नेपथ्ये )

(ख) प्रमादः प्रमादः ।

(ग) ( ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता ) ।

(घ) सीता । अम्महे जाणामि पिअसही मे वासन्ती वाहरदि ।त्ति

(पुनर्नेपथ्ये )

(ङ) सीतादेव्याः स्वकरकलितैः शल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा पोषितोऽभूत्

सीता । किं तस्स । (१)

( पुनर्नेपथ्ये )

---

(१) अम्महे जानामि प्रियसखी मे वासन्ती व्याहरत
(२) किं तस्य ।

(क) वध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

(ख) सीता । (ससंभ्रमं कतिचित् पदानि दधती) अज्जउत्त परित्ताहि परित्ताहि मम तं पुत्तअं । (स्मृतिमभिनीय सवैक्लव्यम्) हद्धि हद्धि ताइं ज्जेव चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणीं अणुबन्धन्ति । हा अज्जउत्त । (१) (इति मूर्च्छति)

(प्रविश्य)

तमसा । वत्से समाश्वसिहि । समाश्वसिहि ।

(नेपथ्ये)

अयि विमानराज अत्रैव स्थीयताम् ।

---

(१) आर्यपुत्र परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा धिक् तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र ।

---

वाग्रैः । अग्रेलोलः पुरतः पल्लवग्रहणार्थं चञ्चलशुण्डाग्रः करिकलभकः करिशावः । विशिष्टवाचकानां पदानां सति विशेषणसमभिव्याहारे विशेष्यमात्रपरत्वं करिकलभादिवदिति वामनसूत्रात्कलभशब्दस्य शावमात्रवाचकत्वं । यत्तु केश्चित्करिकरभक इति पठित्वा करिशावक इति व्याख्याय 'उष्ट्रशावे करिशावे पशुमात्रशावे च करभशब्दः प्रयुज्यते' इत्युक्तं तत्क दृष्टं तैरिति त एव प्रष्टव्याः । कलभक इति अनुकम्पायां कन् ॥

(क) वध्वेति उद्दामेन महाबलेन द्विरदपतिना गजेन्द्रेण । अभियुक्तः आक्रान्तः ॥६॥

(ख) ससम्भ्रमं । पुत्राभिभवश्रवणात्सम्भ्रमः । पुत्रकं पुत्रप्रतिकृतिं । 'इवे प्रतिकृतौ' इति कन् । पुत्रत्वेनाऽभिमतमित्यर्थः । अक्षराणि आर्यपुत्र परित्राहीत्यादीनि । अनुबध्नन्ति अनुसरन्ति । मन्युस्थात्सहसा निस्सरन्तीत्यर्थः ॥ ६ ॥

(क) **सीता** । (आश्वस्य ससाध्वसोत्कम्पोल्लासम्) अम्महे जलभरिदमेहत्थणिदगम्भीरमंसलो कुदो णु एसो भारदीणिग्घोसो मरंतकण्णविवरं मं पि मन्दभाइणीं झत्ति उस्सावेदि । (१)

(ख) **तमसा** । (सस्नेहास्रम्) अयि वत्से ।

(ग) **किमव्यक्तेऽपि निनदे कुतस्त्येऽपि त्वमीदृशी ।**
**स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥**

(घ) **सीता** । भअवदि किं भणासि अपरिप्फुडंति । मए उण सरसञ्जोएण पच्चभिआणिदं अज्जउत्तो ज्जेव वाहरदित्ति । (२)

---

(१) अम्महे जलभृतमेघस्तनितगम्भीरमांसलः कुतोन्वेष भारतीनिर्घोषो म्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युच्छ्वासयति ।

(२) भगवति किं भणसि अपरिस्फुटमिति । मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातमार्यपुत्रएव व्याहरतीति ।

---

(क) ससाध्वसोत्कम्पोल्लासं । स्त्रीस्वभावसुलभेन साध्वसेन भर्तृसूचकशब्दश्रवणजनितेन यः उत्कम्पः सात्विकभावः उल्लासश्च ताभ्याम् सह । जलेति । जलैः भृताः पूर्णा ये मेघास्तेषां स्तनितं गर्जितमिव मांसलः पुष्टः भारतीनिर्घोषः एषः कुतो नु । नु वितर्के । म्रियमाणे कर्णविवरछिद्रे यस्यास्तां । पत्या त्यागेन विरागादियमुक्तिः । मन्दः भागः भाग्यं तद्वर्ती । पत्युर्जीवनमात्रेण भाग्यं तत्सन्निधेरलाभेन तस्य मन्दत्वं । उच्छ्वासयति जीवयति ॥

(ख) सस्नेहास्रं स्नेहहेतुकाश्रुसहितं । त्यागिपतिशब्दश्रवणमात्रेण अत्यौत्सुक्यदर्शनेन स्नेहाश्रुपातः ॥

[illegible] । ३ [illegible] क्तृविशेषज्ञानाजनकत्वादस्फुटेऽपि कुतस्त्येऽपि [illegible] दि भ [illegible] । त्वमीदृशी । इदमेव विवृणोति । स्तनइत्नोः मेघ [illegible] उ [illegible] तं च स्थिता । मयूरी [illegible] ॥ ७ ॥

[illegible] । अन्यपुरुषशब्दश्रवणे ममेदृशी उत्कण्ठा नैव सम्भवे [illegible]

(क) तमसा । श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति ।

(ख) सीता । दिट्ठिआ अपरिहीणराअधम्मो क्खु सो राजा । (१)

( नेपथ्ये )

(ग) यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुनिर्झरकन्दराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

(घ) सीता । ( दृष्ट्वा ) हा कहं पभादचन्दमण्डलावण्डुरपरिक्खामदुब्बलेण आआरेण अअं सोम्म गम्भीराणुभावमेत्तपच्चभिआणिदो अज्जउत्तो ज्जेव ता मं धारेहि (२) (इति तमसामाश्लिष्य मूर्च्छति )

तमसा । (धारयन्ती) वत्से समाश्वसिहि समाश्वसिहि

---

(१) दिष्ट्याऽपरिहीनराजधर्मः खलु स राजा ।

(२) हा कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेणायं सौम्य गम्भीरानुभावमात्रप्रत्यभिज्ञात आर्यपुत्र एव तन्मां धारय ।

---

(क) दण्डधारणार्थं । पापिनो राजदण्डिताः शुद्ध्यन्तीति भावः ॥

(ख) अपरिहीनः अपरित्यक्तः राजधर्मो येन सः । 'धर्मादनिच् केवलात्' इति अनिच् ॥

(ग) यत्रेति । यानि वनानि अध्यवात्सं । अधिपूर्वाद्वसतेर्लुङ् । 'उपान्वध्याङ्वसः' इति कर्मत्वं । बहवो निर्झराः प्रवाहाः येषु तथाभूताः कन्दरा येषु तानि । परिसरस्य पर्यन्तभुवः ॥ ८ ॥

(घ) प्रभातेति । प्रभाते प्रत्यूषे यच्चन्द्रमण्डलं तद्वदासमन्तात् पाण्डुरः विरहातिशयात्परिक्षामो दुर्बलः कृशः तथाविधेन आकारेण । सौम्येन शान्तेन गम्भीरेण धीरेण अनुभावमात्रेण प्रत्यभिज्ञातः स एवायमिति कथञ्चिज्ज्ञातः ॥

( नेपथ्ये )

अनेन पञ्चवटीदर्शनेन

(क) **अन्तर्लीनस्य दुःखाग्नेरथोद्दामं ज्वलिष्यतः**
**उत्पीड इव धूमस्य मोहः प्रागावृणोति माम्** ॥ ९ ॥

हा प्रिये जानकी ।

**तमसा** । (स्वगतम्) इदं तदाशङ्कितं गुरुजनेनापि ।

**सीता** । (समाश्वस्य) हा कहं एदं । (१)

( पुनर्नेपथ्ये )

हा देवि दण्डकारण्यवासप्रियसखि हा देवि विदेहराजपुत्रि ।

(इति मूर्च्छति)

(ख) **सीता** । हद्धी हद्धी मं मन्दभाइणीं उद्दिसिअ आमीलन्तणेत्तणीलुप्पलो मुच्छिदो ज्जेव अज्जउत्तो हा कहं धरणीवठ्ठे निरुस्सासणीसहं विपल्हथो। भअवदि तमसे परित्ताहि परित्ताहि जीआवेहि अज्जउत्तं । (२)

( इति पादयोः पतति )

---

(१) हा कथमेतत् ।

(२) हा धिक् हा धिक् मां मन्दभागिनी उद्दिश्यामीलन्नेत्रनलोत्पलो मूर्च्छित एवार्यपुत्रः । हा कथं धरणीपृष्ठे निरुत्साहनिःसहं विपर्यस्तः । भगवति तमसे परित्रायस्व परित्रायस्व जीवयाऽऽर्यपुत्रम् ।

---

(क) **अन्तरिति** । अन्तः अन्तःकरणे लीनस्य कार्यान्तरव्यापृततया गूढस्य । अथ शोकोद्दीपकदण्डकादर्शनेन उद्दामं अत्यन्तमधिकं ज्वलिष्यतः दुःखाग्नेः सीतावियोगजन्यदुःखरूपस्याऽग्नेः तत्सम्बन्धिनो धूमस्य उत्पीडः राशिरिव मोहः मां प्रागावृणोति । दुःखाग्नेरिति रूपकं उत्पीड इवेत्युपमा अनयोः संसृष्टिः ॥ ९ ॥

(ख) आमीलन्ती नेत्रे नीलोत्पले यस्य सः । निरुत्साहनिःसहं उत्साहरहितं सोढुमशक्यं यथा तथा विपर्यस्तः विपरीतः पतितः ॥

तमसा।

(क) त्वमेव ननु कल्याणि सञ्जीवय जगत्पतिम्।
प्रियस्पर्शो हि पाणिस्ते तत्रैव नियतो भरः॥ १०॥

सीता। जं होदु तं होदु जधा भअवदी भणादि। (१)

(ससंभ्रमं निष्क्रान्ता)

(ख) (ततः प्रविशति भूमौ निपतितः सास्रया सीतया स्पृश्यमानः साल्हादोच्छ्वासो रामः)

सीता। (किञ्चित् सहर्षं स्वगतम्) जाणे पुणो वि पच्चागदं विअ जीविदं तेल्लोअनाहस्स। (२)

रामः। हन्त भोः किमेतत्।

(ग) प्रश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः

---

(१) यद् भवतु तद् भवतु यथा भगवती भणाति।
(२. जानामि पुनरपि प्रत्यागतमिव जीवितं त्रिलोकनाथस्य।

---

(क) त्वमेवेति। हे कल्याणि एतादृशेऽपि परित्यागे प्रियस्पर्शलाभेन कल्याणीति सम्बोधनं। ते पाणिः हस्तः प्रियस्पर्शः प्रियः रामप्रियः स्पर्शो यस्य। हि निश्चितं। तत्रैव पाणावेव भरः अतिशयः नियतः अस्ति नियमेन अस्ति। मया कृतेऽपि पाणिस्पर्शे रामजीवनस्य दुःशकत्वात् तज्जीवयितृत्वरूपातिशयस्य त्वत्पाणावेव सत्वमिति भावः॥ १०॥

(ख) साल्हादोच्छ्वासः। प्रियास्पर्शेन आल्हादः उच्छ्वासश्च जीवनंच ताभ्यां सहितः॥

(ग) प्रश्च्योतनमिति। हरिचन्दनं गोशीर्षाख्यं चन्दनं कल्पतरुर्वा तस्य पल्लवानां किसलयानां प्रश्च्योतनं रसक्षरणं 'श्च्युतिर् क्षरणे' ल्युट्। नितरां पीडितेभ्यः इन्दुकराणां चन्द्रकिरणानां कन्दलेभ्यः नवांकुरेभ्यः जातः सेकः सेचनं नु। नु इति वितर्के

आतप्तजीविततरोः परितर्पणो मे
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥

(क) स्पर्शः पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परिमोहनश्च ।
सन्तापजां सपदि यः प्रतिहत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

(ख) **सीता** । (ससाध्वसोत्कम्पमपसृत्य) एत्तिकं ज्जेव दाणिं मे बहुदरं । (१)

(ग) **रामः** । (उपविश्य) न खलु वत्सलया सीतादेव्याऽभ्युपपन्नोऽस्मि ।

**सीता** । हद्धि हद्धी किंत्ति मं अज्जउत्तो मग्गिस्सदि (२)

**रामः** । भवतु पश्यामि ।

(घ) **सीता** । भअवदि तमसे ओसरह्म । जइ दाव मं पेक्खिस्सादि तदो अणब्भणुण्णादसण्णिधाणेण अहिअं पि मम महाराओ कुविस्सदि । (३)

---

(१) एतावदेवेदानीं मे बहुतरम् ।
(२) हा धिक् हा धिक् किमिति मामार्यपुत्रो मार्गिष्यति ।
(३) भगवति तमसे अपसरामः । यदि तावन्मां प्रेक्षिष्यते तदानभ्यनुज्ञातसन्निधानेनाधिकमपि मम महाराजः कोपिष्यति ।

---

आसमन्तात्तप्तस्य जीवरूपस्य तरोः परितः तर्पणः तर्पकः । 'अनुदात्तेतश्च हलादेः' इति युच् । सञ्जीवनौषधिरसः हृदि प्रसिक्तो नु । उत्प्रेक्षालङ्कारः ॥ ११ ॥
(क) **स्पर्शोति** । आनन्दनेन आनन्दजनकत्वेन । नन्दयतेः भावे ल्युट् । सोयं भावसन्धिः ॥ १२ ॥

(ख) ससाध्वसोत्कम्पं साध्वसेन भयेन यः उत्कम्पस्तत्सहितं । अननुज्ञातसन्निधानात् ॥

(ग) वत्सलया स्नेहवत्या । मया त्यागे कृते तया ममेमां अवस्थां आलोक्य स्वत सन्निधानकरणात् । अभ्युपपन्नोऽस्मि अनुगृहितोऽस्मि ॥

(घ) अनभ्यनुज्ञातसन्निधानेन न अभ्यनुज्ञातं अनुमोदितं सन्निधानं तेन ॥

**तमसा** । अयि वत्से भागीरथीवरप्रसादात् वनदेवतानामप्यदृश्यासि संवृता ।

**सीता** । आं अत्थि एदं । (१)

**रामः** । हा प्रिये जानकि । ननु प्रिये जानकि ।

(क) **सीता** । (समन्युगद्गदम्) अज्जउत्त असरिसं क्खु एदं वअणं इमस्स वुत्तन्तस्स । (सास्रम्) अहवा किं त्ति वज्जमई जम्मन्तरेसु विपुणो असम्भाविददुल्लहदंसणस्स मं ज्जेव मन्दभाइणीं उद्दिसिअ वच्छलस्स एवंवादिणो अज्जउत्तस्स उअरि कधं णिरणुक्कोसा भविस्सं । अहं एदस्स हिअअं जाणामि ममाविएसो त्ति । (२)

(ख) **रामः** । (सर्वतोविलोक्य सनिर्वेदम्) हा कथमत्र न कश्चिदपि ।

**सीता** । भअवदि तमसे तहा णिक्कारणपरिच्चाइणो वि एदस्स एदिणा एवंविधेण दंसणेण कीदिसो विअ मे हिअआणुबन्धो त्ति ण आणामि ण आणामि । (३)

---

(१) आं अस्त्येतत् ।

(२) आर्यपुत्र असदृशं खल्वेतद्वचनमस्य वृत्तान्तस्य । अथवा किमिति वज्रमयीं जन्मान्तरेष्वपि पुनरसम्भावितदुर्लभदर्शनस्य मामेव मन्दभागिनीमुद्दिश्य वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि कथं निरनुक्रोशा भविष्यामि । अहमेतस्य हृदयं जानामि ममापि एष इति ।

(३) भगवति तमसे तथा निष्कारणपरित्यागिनोप्येतस्यैतेनैवंविधेन दर्शनेन कीदृश इव मे हृदयानुबन्ध इति न जानामि न जानामि ।

---

(क) समन्युगद्गदं । मन्युः प्रणयकोपः गद्गदं स्खलितवाक् शोकातिशयेन बाष्पोपरुद्धकण्ठत्वात् ताभ्याम् सहितं । सास्रं पूर्वानुभूतसकलदुःखस्मरणात् अश्रु तत्सहितं । अस्य वृत्तान्तस्य वन्हिशुद्धाया अपि मम पामरोक्तिमात्रेण त्यागरूपस्य वृत्तान्तस्य असदृशं प्रिये जानकीति वचनं अत एव मन्युः । वज्रमयी विकारे मयट् । वज्रनिर्मिता । अत एव अतिदुःसहविरहेऽपि न प्राणहानिः । असम्भावितं अतर्क्यं अत एव दुर्लभं दर्शनं यस्य । वत्सलस्य स्नेहवतः । एवंवादिनः प्रियेति भाषमाणस्य । निरनुक्रोशा निर्दया ॥

(ख) सनिर्वेदं सखेदं । सीताया अदर्शनेन खेदः ॥

तमसा । जानामि वत्से जानामि ।

(क) तटस्थं नैराश्यादपिच कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन् झटिति घटनोत्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥ १३ ॥

रामः । देवि ।

(ख) प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्येवार्द्रयति मां त्वं पुनः कासि नन्दिनि ॥ १४ ॥

(ग) सीता । एदे क्खु दे अगाधदंसिदसिणेहसम्भारा आणन्दणिस्सन्दिणो सुदा मए अज्जउत्तस्स उल्लावा । जाणं पच्चएण णिक्कारणपरिच्चाअसल्लिदो वि बहुमदो मे जम्मलाहो । (१)

---

(१) एते खलु तेऽगाधदर्शितस्नेहसंभारा आनन्दनिष्यन्दिनः श्रुता मयाऽऽर्यपुत्रस्योल्लापाः । येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मे जन्मलाभः ।

---

(क) तटस्थमिति नैराश्यात् निर्गता आशा पुनः समागमाशा यस्मात् तन्निराशं तस्य भावो नैराश्यं औदासिन्यं तस्मात् । तटस्थं उदासीनं अपि च किञ्च । विप्रियवशात् सापवादपरित्यागवशात् । कलुषं मलिनं । कोपाद्याकुलमिति यावत् । अस्मिन् दीर्घे वियोगे बहुकालसञ्जातविरहे । झटिति अकस्मात् । घटनया परस्परदर्शनेन उत्तम्भितमिव जडीकृतं स्तब्धप्रायमिव । सौजन्यात् प्रियेत्यादिवाक्यश्रवणेनाऽनुरागदर्शनात प्रसन्नं प्रीतं । दयितस्य प्रियस्य करुणैः शोकव्यञ्जकवाक्यैः । गाढः घनीभूतः करुणः शोको यस्मिन् तत्तथा अतिशोकव्याप्तं । अस्मिन् क्षणे तव हृदयं प्रेम्णा द्रवीभूतं विलीनघृतवत् द्रवत्वमापन्नं अस्तीति शेषः । इयं भावशबलता ॥ १३ ॥

(ख) प्रसाद इति ते स्पर्शः मूर्तः प्रसाद इव साकारा प्रसन्नतेव स्नेहेन आर्द्रः अत एव शीतलः अद्याऽपि आर्द्रयत्येव आर्द्रं करोत्येव । त्वं पुनः हे नन्दिनि आनन्ददायिनि कासि । न दृश्यसे इति भावः ॥ १४ ॥

(ग) अगाधदर्शितस्नेहसम्भाराः अगाधं गम्भीरं दर्शितः स्नेहसम्भारः प्रेमसमूहो यैः ।

(क) रामः। अथवा कुतः पुनः प्रियतमा। नूनं संकल्पाभ्यासपाटवोत्पादित एष रामभद्रस्य भ्रमः।

( नेपथ्ये )

प्रमादः प्रमादः। ( सीतादेव्याः स्वकरकलितैरित्यर्धं पठ्यते )

रामः। ( सकरुणौत्सुक्यम ) किं तस्य।

( पुनर्नेपथ्ये )

( वध्वा सार्धमित्युत्तरार्द्धं पठ्यते )

(ख) सीता। को दाणिं अहिउज्जिस्सदि। (१)

रामः। क्वासौ क्वासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति। ( इत्युत्तिष्ठति )

( प्रविश्य )

सम्भ्रान्ता वासन्ती। कथं देवो रघुनन्दनः।

---

(१) क इदानीमभियोक्ष्यते।

---

'सम्भारः सम्भृतौ गणे' इति विश्वः। आनन्दनिष्यन्दिनः आनन्दस्राविणः। उल्लापाः शोकव्यञ्जकानि भाषणानि। येषां उल्लापानां प्रत्ययेन श्रवणरूपेण अनुभवेन निष्कारणपरित्यागशल्यितः निष्कारणपरित्यागात् शल्यितः शल्यवानिव सञ्जातः एवंविधोऽपि जन्मलाभो मे बहुमतः॥

(क) सङ्कल्पाभ्यासपाटवोत्पादितः सङ्कल्पस्य प्रियाविषयचिन्तायाः अभ्यासः पुनः पुनः आवृत्तिः तेन यत्पाटवं पटुत्वं कुशलता तस्मात् उत्पादितः॥

(ख) अभियोक्ष्यते मत्पोषितकलभक्षणार्थं तत्प्रतियोद्धारं द्विरदपतिमाक्रमिष्यतीत्यर्थः॥

सीता । कथं पिअसही मे वासन्दी । (१)

वासन्ती । जयति जयति देवः ।

रामः । (निरूप्य) कथं देव्याः प्रियसखी वासन्ती ।

(क) वासन्ती । देव त्वर्यतां त्वर्यतामितो जटायुगिरिशिखरस्य हस्तदक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य संभावयतु देव्याः पुत्रकं देवः ।

सीता । हा ताद जटाओ सुण्णं तुए विणा जनट्ठाणं । (२)

(ख) रामः । अहह हृदयमर्मच्छिदः खल्वमी कथोद्घाताः ।

वासन्ती । इत इतो देवः ।

सीता । भअवदि सच्चं ज्जेव वणदेवदा वि मं ण पेक्खदि । (३)

तमसा । अयि वत्से सर्वदेवताभ्यः प्रकृष्टमैश्वर्यं मन्दाकिनीदेव्याः तत् किमाशङ्कसे ।

सीता । तदो अणुसरह्म । (४) (इति परिक्रामतः)

रामः । (परिक्रम्य) भगवति गोदावरि नमस्ते ।

वासन्ती । (निरूप्य) देव देव नमस्ते मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

रामः । विजयतामायुष्मान् ।

सीता । अम्महे ईदिसो एसो सो संवुत्तो । (५)

---

(१) कथं प्रियसखी मे वासन्ती ।
(२) हा तात जटायो शून्यं त्वया विना जनस्थानम् ।
(३) भगवति सत्यमेव वनदेवताऽपि मां न प्रेक्षते ।
(४) ततोऽनुसरावः ।
(५) अम्महे ईदृश एष स संवृत्तः ।

---

(क) हस्तदक्षिणेन दक्षिणहस्तदेशस्थितेन सीतातीर्थेन सीतायाः जलावतरणमार्गेण ॥

(ख) कथोद्घाताः उल्लेखाः ॥

राम । देवि दिष्ट्या वर्धसे ।

(क) येनोद्गच्छद्बिसकिसलयस्निग्धदन्तांकुरेण
व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णपूरात्
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥ १५ ॥

सीता । अविउत्तो दाणीं अअं दीहाऊ इमाए सोम्मदंसणाए होदु । (१)

रामः । सखि वासन्ति पश्य पश्य कान्तानुवृत्तिचातुर्यमप्यनुशिक्षितं वत्सेन ।

(ख) लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपातिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीलीलातपत्रं धृतम् ॥ १६ ॥

---

(१) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु ।

---

(क) येनइति उद्गच्छन् बिसस्य किसलयमिव कोमलं पत्रमिव स्निग्धः चिक्कणः दन्तांकुरो यस्य तेन। अतिकोमलदन्तेनेत्यर्थः येन कलभेन। हे सुतनु शोभनातनूर्यस्याः सा तत्सम्बोधनं। 'अम्बार्थनद्योर्ह्रस्वः'। ते कर्णपूरात् कर्णाभरणात् लवलीपल्लवः लवली राजामलकी रायआवळी, हर्फारेवडीति भाषायां तस्याः पल्लवः व्याकृष्टः आकृष्य गृहीतः आसीत्। सः अयं प्रत्यभिज्ञातः तव पुत्रः मदमुचां वारणानां विजेता तरुणे वयसि यत्कल्याणं अतिशौर्यबलादि तस्य भाजनं पात्रं जातः ॥ १५ ॥

(ख) लीलेति । यत् यतः स्नेहात् प्रणयातिरेकात्। लीलया अनायासेन उत्खातानि यानि मृणालकाण्डानि बिससमूहाः तेषां कवलच्छेदाः ग्रासच्छेदाः तेषु। पुष्यद्भिः विकसद्भिः पुष्करैः कमलैः वासितस्य सुरभीकृतस्य पयसः जलस्य गण्डूषाणां मुखपूरितांशानां संक्रान्तयः सञ्चाराः सम्पातिताः । पूर्वं भुक्त्यर्थं मृणालकवलेषु दत्तेषु जलगण्डूषा अपि मध्येमध्ये पानार्थं दत्ता इत्यर्थः । शीकरिणा अम्बुकणवता करेण शुण्डादण्डेन कामं यथेच्छं सेकः सेचनं विहितः सम्पादितः । विरामे सेकावसाने

**सीता** । भअवदि तमसे अअं दाव ईदिसो जादो । दे उण ण आणामि कुसलवा एत्तिएण कालेण कीदिसा विअ होन्ति । (१)

**तमसा** । यादृशोऽयं तादृशौ तावपि ।

**सीता** । ईदिसी अहं मन्दभाइणी जाए ण केवलं णिरन्तरं अज्जउत्तविरहो पुत्तविरहो वि । (२)

**तमसा** । भवितव्यतेयमीदृशी ।

(क) **सीता** । किं वा मए पसूदाए जेण तादिसं पि मम पुत्तकाणं ईसविरलकोमलधअलदसणुज्जलकवोलं अनुबद्धमुद्धकाअलीविहसिदं णिबद्धकाकसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिअं अज्जउत्तेण । (३)

(ख) **तमसा** । अस्तु देवताप्रसादात् ।

---

(१) भगवति तमसे अयं तावदीदृशो जातः । तौ पुनर्न जाने कुशलवौ एतावता कालेन कीदृशाविव भवतः ।

(२) ईदृश्यहं मन्दभागिनी यस्या न केवलं निरन्तरमार्यपुत्रविरहः पुत्रविरहोऽपि ।

(३) किंवा मया प्रसूतया येन तादृशमपि मम पुत्रयोरीषद्विरलकोमलधवलदशनोज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुगलं न परिचुम्बितमार्यपुत्रेण ।

---

अनरालं अवक्रं सरलं यत् नालं कमलदण्डः यस्याः एतादृशी या नलिनी सैव लीलातपत्रं धृतम् ॥ १६ ॥

(क) ईषद्विरलाः कोमलाः सुकुमाराः धवलाः दशना यस्मिन् तत् 'रदना दशना दन्ता' इत्यमरः । दशनानि इति विग्रहप्रदर्शनं केषां चिद्भ्रममूलमेव । उज्ज्वलौ कपोलौ यस्मिन् तच्च तच्च । काकली सूक्ष्मो मधुरोध्वनिः विहसितं मध्यमो हासः अनुबद्धे निरन्तरं सम्बद्धे मुग्धे मनोहरे काकलीविहसिते यस्मिन् तत् । निबद्धः धृतः काकशिखण्डकः काकपक्षो येन तत् । करिकलभादिवत्प्रयोगः । अमलं निर्मलं पुत्रद्वयस्य मुखमेव पुण्डरीकयुगलं सिताब्जद्वयम् ॥

(ख) देवताप्रसादात् तदपि समाश्वस्यत इति शेषः । इत्याशीर्वादे अस्तु इति लोट् ॥

(क) **सीता ।** भअवदि तमसे एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी ताणं च पिदुणो सण्णिधाणेण खणमेत्तं संसारिणी म्हि संवुत्ता । (१)

(ख) **तमसा ।** किमत्रोच्यते प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य । परमं चैतदन्योन्यसंश्लेषणं पित्रोः ।

(ग) **अन्तःकरणतत्वस्य दम्पत्योः स्नेहसंश्रयात्**
**आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ १७ ॥**

**वासन्ती ।** इतोऽपि देवः पश्यतु ।

(घ) **अतरुणमदताण्डवोत्सवान्ते-**
**ष्वयमचिरोद्गतमुग्धलोलबर्हः ।**

---

(१) भगवति तमसे एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी तयोश्च पितुः सन्निधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता ।

---

(क) उच्छ्वसितौ ईषदुन्नतौ प्रस्नुतौ क्षीरस्राविणौ स्तनौ यस्याः सा । तयोः पुत्रयोः पितुः तत्पितुः रामस्य च ॥

(ख) प्रसवः पुत्रादिः स्नेहस्य प्रकर्षपर्यन्तः प्रकर्षस्य अतिशयस्य पर्यन्तः पराकाष्ठा । पित्रोः मातापित्रोः । 'पिता मात्रा' इत्येकशेषः । अन्योन्यस्य परस्परस्य संश्लेषणं चित्तानुबन्धनं ॥

(ग) **अन्तःकरणेति** स्नेहसंश्रयात् स्नेहसम्बन्धात् उभयोः दम्पत्योः स्त्रीपुंसयोः अन्तःकरणतत्वस्य चित्ताख्यतत्वस्य अपत्यरूपः एकः मुख्यः असाधारणः अयं आनन्दग्रन्थिः निबध्यते । अपत्योत्पत्तेः पूर्वं यद्दम्पत्योरसाधारणं प्रेम तदपत्योत्पत्तेरनन्तरं प्रेम्णो बन्धनमेव भवतीति भावः ॥ १७ ॥

(घ) **अतरुणेति** अचिरं नवीनं उद्गतं प्ररूढं मुग्धं सुन्दरं लोलं चञ्चलं बर्हं यस्य सः । 'पिच्छबर्हे नपुंसके' इत्यमरान्नपुंसकबर्हशब्दस्य पुंस्त्वलेखनं भ्रममूलमेव । उत् उन्नता शिखा यस्य सः उच्छिखः । वध्वाः सखा सहचरः सः 'राजाहःसखिभ्यष्टच्' इति टच् । यः प्रियया पूर्वं पुत्रीकृतः पोषितः एषः शिखण्डी मयूरः । अतरुणः गोऽतिमनागमः यो मदः हर्षः विकारो वा तेन यत्ताण्डवं तदेव उत्सवः तस्यान्ते ।

मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

सीता । (सकौतुकास्रम्) एसो सो एसो सो । (१)
रामः । मोदस्व वत्स मोदस्व ।
सीता । एवं होदु । (२)

(क) रामः । भ्रमिषु कृतपुटान्तर्मण्डलावृत्तचक्षुः
प्रचलितचतुरभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

(ख) हन्त तिर्यञ्चोऽपि परिचयमनुरुध्यन्ते ।

(ग) कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितो य आसीत् ।

---

(१) एष स एष सः ।
(२) एवं भवतु ।

---

कदम्बे तन्नाम्नि तरौ नदति कूजति मणिमयो मुकुट इव । तेन मयूरस्याऽतिसौन्दर्यं व्यज्यते । पुष्पिताग्रावृत्तं 'अयुजि नयुगरेफतो यकारो युजि च नजौजरगाश्च पुष्पिताग्रा' इति तल्लक्षणात् ॥ १८ ॥

(क) भ्रमिष्विति । अहं वत्सलेन मनसा स्निग्धेन अन्तःकरणेन सुतमिव त्वां स्मरामि । कीदृशं मुग्धया सुन्दर्या सीतया करकिसलयतालैः करकिसलयेन करपल्लवेन तालैः कालक्रियामानैः नर्त्यमानं । णिजन्तात्कर्मणि शानच् । कीदृश्या भ्रमिषु तव भ्रमणेषु प्रचलिते अतिचञ्चले चतुरे चातुर्यवती ये भ्रुवौ तयोः ताण्डवैः नृत्याकारेण चालनैः कृतपुटं किञ्चित् सङ्कोचितं अन्तः मण्डले मध्यभागे आवृत्तं विपरिवर्तनं यत् चक्षुः तत्कर्म मण्डयन्त्या शोभयन्त्या ॥ १९ ॥

(ख) अनुरुध्यन्ते अनुसरन्ति । स्मरन्तीत्यर्थः ॥

(ग) कतिपयेति । यः कदम्बो नीपः प्रियतमया परिवर्धितः सन् । कतिपयानां कियतां स्वल्पानामिति यावत् । कुसुमानामुद्गमो यस्मिन् सः आसीत् । एषः गिरि-

सीता । ( निरूप्य सास्रम् ) सुट्ठु पच्चहिआणिदं अज्जउत्तेण । (१)

रामः । स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

वासन्ती । अत्र तावदासनपरिग्रहं करोतु देवः ।

(क) एतत्तदेव कदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

(ख) रामः । इदं तावदशक्यमेव द्रष्टुम् । (इत्यन्यतो ऽऽन्नुपविशति) ।

(२) (ग) सीता । सहि वासन्दि किं तुए कदं अज्जउत्तस्स मम अ. एदं दंसअन्तीए । हद्धी हद्धी सो ज्जेव अज्जउत्तो तं ज्जेव पञ्चवटीवणं सा ज्जेव पिअसही वासन्दी ते ज्जेव विविहविस्सम्भसाक्खिणो गोदावरी-

---

(१) सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

(२) सखि वासन्ति किं त्वया कृतमार्यपुत्रस्य मम चैतद् दर्शयन्त्या । हा धिक् हा धिक् स एवार्यपुत्रस्तदेव पञ्चवटीवनं सैव प्रियसखी वासन्ती त एव विविधविस्रम्भसाक्षिणो गोदावरीकानन-

---

मयूरः देव्याः स्मरति । 'अधीगर्थे'—ति षष्ठी । देवीं सीतां स्मरतीत्यर्थः । स्वजन इव बन्धाविव अत्र कदम्बे यतः प्रमोदं एति प्राप्नोति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २० ॥

(क) तिरश्चां परिचयमेव द्रढयितुं विवृणोति—एतदिति । एतत् परिदृश्यमानं शिलातलं तदेव बहुशः पूर्वानुभूतमेव । यत् एभ्यः समीपवर्तिभ्यः हरिणेभ्यः बहुशः तृणं अदात् दत्तवती । ततः ततो हेतोः । तेन तिरश्चां हरिणानामपि परिचयानुरोधित्वमुक्तं भवति ॥ २१ ॥

(ख) इदं । द्रष्टुमशक्यमेव । तत्रत्यसर्वरहःक्रीडास्मारकतया शोकोद्दीपकत्वात् ॥

(ग) जातनिर्विशेषाः जातेभ्यः पुत्रेभ्यः निर्विशेषाः विशेषरहिताः । पुत्रसमस्नेह-

काणणुद्देसा ते ज्जेव जादणिव्विसेसा मअपक्खिपादवा साज्जेवचाहं मम उण मन्दभाइणीए दीसन्तं वि सव्वं ज्जेव एदं णत्थित्ति ता इदिसो जीअलोअस्स परिवत्तो । (१)

(क) **वासन्ती** । सखि सीते कथं न पश्यसि रामस्यावस्थाम् ।

(ख) कुवलयदलस्निग्धैरङ्गैर्ददौ नयनोत्सवं
सततमपि ते स्वेच्छादृश्यो नवंनवमेव यः ।
विकलकरणः पाण्डुः सोयं शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

**सीता** । पेक्खामि सहि पेक्खामि । (२)

(ग) **तमसा** । पश्यन्ती प्रियं भूयाः ।

---

देशास्त एव जातनिर्विशेषा मृगपक्षिपादपा सैवचाहं मम पुनर्मन्दभागिन्या दृश्यमानमपि सर्वमेवैतन्नास्तीति तदीदृशो जीवलोकस्य परिवर्तः । (१)

(२) प्रेक्षे सखि प्रेक्षे ।

---

विषया इत्यर्थः । परिवर्तः परिभ्रमणं । स्वभाग्यविपर्यासे सर्वो जीवलोको विपरीतो भवतीत्यर्थः ॥

(क) अवस्थां दशाम् ॥

(ख) **कुवलयेति** । कुवलयस्य नीलोत्पलस्य दलानि पत्राणि तैरिव स्निग्धैरङ्गैः । स्वेच्छादृश्यः । स्वस्या यदा इच्छा तदा द्रष्टुं शक्यः नवंनवमेव नयनोत्सवं ददौ । सोऽयं विकलकरणः विकलानि करणानि इन्द्रियाणि यस्य सः पाण्डुः धूसरवर्णः । शुचा त्वद्विरहजन्यशोकेन । इदं देहलीदीपन्यायेन त्रिषु अन्वेति । परिदुर्बलः कथमपि कथञ्चित् स इति उन्नेतव्यः रामोऽयमिति अनुमेयः । तथाऽपि एवमपि दृशोः प्रियः । त्वत्परित्यागेऽपि त्वद्विरहावेशेन विकलत्वात् दृशोः प्रियत्वमिति भावः । हरिणी-वृत्तम् ॥ २२ ॥

(ग) पश्यन्ती प्रियं भूयाः प्रियं पश्यन्ती भूयाः । निरन्तरं प्रेक्षस्वेति भावः । अनया आशिषा तव पुनः पतिसमागमो भवतु इत्याशीः सूचिता ॥

(क) सीता । हा देव्व एसो मए विणा अहं पि एदेण विणा त्ति सिविणे वि केण सम्भाविदं आसी । ता मुहुत्तकं वि जम्मन्तरादो विअ अणुलद्धदंसणा वाहसलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तं । (१)

तमसा । (सस्नेहास्रं परिष्वज्य) ।

(ख) विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

(ग) वासन्ती । ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रत्युत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

---

(१) हा दैव एष मया विना अहमप्येतेन विनेति स्वप्नेऽपि केन संभावितमासीत् । तन्मुहूर्तकमपि जन्मान्तरत इव अनुपलब्धदर्शना बाष्पसलिलान्तरेषु प्रेक्षे तावद्वत्सलमार्यपुत्रकम् । (इति सतृष्णं पश्यति) ।

---

(क) अनुपलब्धदर्शना अनुपलब्धं अप्राप्तं दर्शनं यया ॥

(ख) विलुलितमिति । आनन्दशोकप्रभवं प्रियदर्शनादानन्दः पुनःसमागमासम्भवात् शोकः तत्प्रभवं । अतिपूरैः धारासम्पातैः विलुलितं गलितं बाष्पं अश्रु अवसृजन्ती अतीववर्षन्ती । तृष्णया दर्शनाल्लौत्सुक्येन उत्तानदीर्घा उत्ताना विस्फारिता अत एव दीर्घा । स्नेहं निष्यन्दिनी उद्गिरन्ती । प्रोषितभर्तृकाणां नेत्राञ्जनस्य निषिद्धत्वा धवला बहलं अतिशयेन मुग्धा सुन्दरा अत एव दुग्धकुल्या दुग्धस्य कुल्या अल्पा कृत्रिमा सरित् इव ते दृष्टिः हृदयेशं हृदये वर्तमानं प्रियं स्नपयति आर्द्रीकरोति ॥२३॥

(ग) ददत्विति । मधु पुष्पजं मकरन्दं क्षौद्रं वा च्योतन्ति क्षरन्ति ते तथा तरवः । पुष्पैः फलैश्च अर्घ्यं ददतु । स्फुटितानां विकचानां कमलानां आमोदः प्रायो बहुलं येषु ते वनानिलाः प्रवान्तु । रत्या रामविषयकप्रेमभरेण उत्कण्ठाः गद्गदकण्ठाः उन्नतग्रीवाः वा उत्कण्ठायुक्ताः वा शकुन्तयः पक्षिणः । अविरलं सन्ततं कलं अस्फुटं मधुरञ्च क्वणन्तु ॥ २४ ॥

रामः । एहि सखि वासन्ति नन्वितः स्थीयताम् ।

वासन्ती । (उपविश्य साश्रम्) महाराज अपि कुशलं कुमारलक्ष्मणस्य ।

रामः । (अश्रुतिमभिनीय) ।

(क) करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥

वासन्ती । महाराज ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्य ।

(ख) रामः । (स्वगतम्) अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलानुप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । (प्रकाशम्) आं कुशलं कुमारस्य । (इति रोदिति) ।

(ग) वासन्ती । अयि देव किमिति दारुणो दारुणः खल्वसि ।

---

(क) करेति । करेण स्वहस्तकमलेन वितीर्णैः दत्तैः अम्बुनीवारशष्पैः यान् तरुशकुनिकुरङ्गान् अम्बुभिस्तरून् नीवारैः तृणधान्यैः शकुनीन् शष्पैः कोमलैः तृणैः कुरंगान् मैथिली सीता अपुष्यत् अपालयत् । प्रस्तरोद्भेदयोग्यः प्रस्तरस्य पाषाणस्य उद्भेदः द्रवः तद्योग्यः तत्तुल्यः मे हृदयस्य द्रव इव विकारः कोऽपि अनिर्वचनीयो भवति । एतेन स्वस्य धीरोदात्तत्वेन हृदयस्य पाषाणतुल्यत्वेऽपि एतान् दृष्ट्वा हृदयं द्रवत इति भावः । पूर्वार्धे यथासंख्यालङ्कारः ॥ २५ ॥

(ख) निष्प्रणयं स्नेहहीनं आमन्त्रणपदं आव्हानबोधकशब्दोच्चारणं सौमित्रिमात्रे लक्ष्मणस्येति शब्दोच्चारणं । मात्रशब्देन स्वस्य व्युदासः । बाष्पैः कण्ठावरोधात् स्खलितानि गद्गदानि अक्षराणि यस्मिन् तथाभूतः । तथा मन्ये एवमनुमिनोमि । विदितः सीतायाः त्यागरूपो वृत्तान्तो यया । अत्र त्यागपदानुपादानेन रामस्य तद्वाक्योच्चारणसमये अतिकातरता सूच्यते । तेन न्यूनपदत्वं रसपोषाय । अयं भावः यदीयमविदितवृत्तान्ता भवेत् तदा सीताया अपि कुशलं पृच्छेत् । माञ्चानुचितकारिणं ध्वनयन्ती महाराजेति सम्बोधितवती । लक्ष्मणविषयकुशलप्रश्नेन च यथा त्वया सीता परित्यक्ता तथा लक्ष्मणोऽपि कुतो न त्यक्त इत्याक्षेपो व्यज्यते ॥

(ग) दारुणः सीतात्यागे दारुणचित्तः ॥

(क) सीता । सहि वासन्दि किं तुमं सि एव्वंवादिणी । पिआरुहो क्खु सव्वस्स अज्जउत्तो विसेसदो मम पिअसहीए । (१)

(ख) वासन्ती । त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ॥ २६ ॥

(इति मूर्च्छति)

(ग) रामः । स्थाने खलु वाक्यनिवृत्तिर्मोहश्च । सखि समाश्वसिहि समाश्वसिहि ।

---

(१) सखि वासन्ति किं त्वमस्येवंवादिनी । प्रियार्हः खलु सर्वस्यार्यपुत्रो विशेषतो मम प्रियसख्याः ।

---

(क) एवंवादिनी दारुणो दारुण इति वादिनी ॥

(ख) त्वमिति । त्वं जीवितं मदीयं दीर्घमायुः प्राणा वा । त्वं मे द्वितीयं हृदयं मनः असि । आनन्दजनकत्वात् नयनयोः त्वं कौमुदी चन्द्रिकाऽसि । अङ्गे त्वं अमृतं सञ्जीवनौषधत्वात् । इत्यादिभिः इति वाक्यानि आदीनि येषां तैः प्रियशतैः अनन्तैः प्रियवाक्यैः मुग्धां मूर्खां ईदृशकठोरहृदयत्वाज्ञानाच्चाटुवाक्यश्रवणैरेव मोहितां वा सरलहृदयां वा अनुरुध्य वशीकृत्य अनुकूलभाषणेन आनन्दयित्वा स्वहस्तसंवर्धितां चिरतरकालपालितां गृहशकुन्तिकां शाकुनिक इव आसन्नप्रसवां वक्षसि सुप्तां त्वयि अतिविश्रब्धां तामेव दोहदपूरणमिषेण लक्ष्मणहस्तेन त्यक्तवानसीति वाक्यशेषः । तामेवेत्यन्तं वाक्यमुक्त्वा सीताप्रियसखीत्वात्तच्छोकावेशेन बाष्पोपरुद्धकण्ठतया पूर्वोक्तं वाक्यशेषं वक्तुं अशक्नुवती वासन्ती आह—शान्तमिति । पापमिति शेषः । इदं त्वयि असम्भाव्यं यत्त्वमेवं कृतवानसि इति तत्परिहारव्यञ्जकः शान्तशब्दोच्चारः । अथवा त्वां प्रति किं शेषं वाक्यं वक्तव्यं । इह अस्मिन्नवसरे उत्तरेण । तामेवेत्यस्मादधिकमुक्तेन उक्तवाक्यशेषेण किं । गते नीरे सेतुबन्धनवन्निष्प्रयोजनेन उपालम्भेन न किञ्चित् फलमित्यर्थः ॥ २६ ॥

(ग) स्थाने युक्तं । वाक्यनिवृत्तिः अर्धं वाक्यमुक्त्वा अर्धस्य त्यागः मोहो मूर्च्छा च । इदं द्वयमपि सीताप्रियसखीत्वाद्युक्तमेवेत्यर्थः ॥

(क) **वासन्ती** । (समाश्वस्य) तत् किमिदमकार्यमनुष्ठितं देवेन ।

**सीता** । सहि वासन्दि विरम विरम । (१)

(ख) **रामः** । लोको न मृष्यतीति ।

(ग) **वासन्ती** । तत् कस्य हेतोः ।

(घ) **रामः** । स एव जानाति किमपि ।

(ङ) **तमसा** । उचितस्तदुपालम्भः ।

(च) **वासन्ती** । **अयि कठोर यशः किल ते प्रियं**
**किमयशो ननु घोरमतः परम् ।**
**किमभवद्विपने हरिणीदृशः**
**कथय नाथ कथं बत मन्यसे ॥ २७ ॥**

---

(१) सखि वासन्ति विरम विरम ।

---

(क) अकार्यं अनुचितं कार्यम् ॥

(ख) लोको न मृष्यति न तितिक्षते इति सीतात्यागरूपं अकार्यमप्यनुष्ठितमिति भावः ॥

(ग) लोकैरसहने कारणं पृच्छति—तत्कस्य हेतोः तल्लोकामर्षणं कस्य हेतोः कस्मात्कारणात् । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इति हेतुशब्दप्रयोगे षष्ठी ॥

(घ) स एव जानाति । किमपि अनिर्वचनीयं । नाऽहं किमपि तस्यां दोषलेशमात्रमपि जानामीति भावः । तस्या उत्पत्त्यैव शुद्धत्वात् अतिशयशुद्धिपावकेन शोधितत्वाच्चेति भावः ॥

(ङ) उचितस्तदुपालम्भः लोककर्तृकः सीतोपालम्भः रामकर्तृकः लोकोपालम्भश्चाप्युचित एव लोकानां स्वेच्छाचारित्वादिति भावः ॥

(च) अयीति । हे कठोर एवं दारुणतमहृदय । ते यशः प्रियं किल । किल इति प्रसिद्धौ । रामस्य यशःप्रियत्वं हि लोके प्रसिद्धतरं । अतःपरं सीतात्यागादन्यत् घोरं अतिपीडाजनकं अयशः किम् । लोकोत्तरयशःप्रियत्वेन प्रसिद्धस्य तव ईदृशस्य आसन्नप्रसवनिर्दोषपतिव्रतास्वभार्यात्यागरूपस्य अयशसः सम्पादनमत्यन्तानुचितमिति भावः । हरिणीदृशः परित्यागजनितेन स्त्रीस्वभावसुलभेन भयेन चकितत्वात् हरिण्या इव तरले दृशौ यस्यास्तस्याः । किमभवत् । त्यागोत्तरं वृत्तं किञ्चिद्विदितवानसि चेत्सिचेत्कथय । हे नाथ स्वभार्याविषये सर्वतोमुखस्वामिन् । अतस्तव सर्वमेवेदमुचितमेवेति भावः । बत इति खेदे । कथं मन्यसे सा जीवति मृता वा स्वस्मिन् प्रियतमत्वं स्वामित्वं वा ॥ २७ ॥

(क) सीता। तुमं ज्जेव सहि वासन्दि दारुणा कठोरा अ जा एव्वं अज्जउत्तं पलित्तं पदीवेसि। (१)

(ख) तमसा। प्रणय एवं व्याहरति शोकश्च।

(ग) रामः। सखि किमत्र मन्तव्यम्।

(घ) त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुमुग्धमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ २८॥

(ङ) सीता। अज्जउत्त धरामि एसा धरामि। (२)

---

(१) त्वमेव सखि वासन्ति दारुणा कठोरा च यैवमार्यपुत्रं प्रदीप्तं प्रदीपयसि।

(२) आर्यपुत्र ध्रिये एषा ध्रिये।

---

(क) प्रदीप्तं अतिशोकेन तातप्यमानं। प्रदीपयसि सन्तापयसि॥

(ख) प्रणयः त्वद्विषयोनुरागः शोकश्च त्वद्विवासनिबन्धनः व्याहरति। करणस्य कर्तृत्वं सौकर्यातिशयविवक्षया। वासन्ती वक्तुमनुचितं शोकानुरागाभ्यां एवं वदतीत्यर्थः॥

(ग) रामस्त्यागोत्तरं वृत्तं कथयन्नाह—किमत्रेति नान्यत्किमपि। अवश्यं सा मृतैवेति निश्चीयते इति भावः॥

(घ) तदेवाऽऽह—त्रस्तेति। त्रस्तः भयचकितः एकं हायनं वर्षं यस्य सः कुरङ्गः मृगः तस्य इव विलोला चञ्चला दृष्टिः यस्यास्तस्याः। एतेन अतिभीतिमत्वे दृष्टेरतितरलता सूच्यते। परिस्फुरितस्य भयाभिभूततया कम्पितस्य गर्भस्य भरेण भारेण अलसायाः ततोन्यत्र अपसर्पितुमशक्नुवत्याः तस्याः स्मृतिविषयायाः सीतायाः ज्योत्स्नामयीव। विकारे मयट्। चन्द्रिकानिर्मितेव। मृदु मुग्धं यन्मृणालं बिसं तत्तुल्या। 'कल्पबादयः प्रत्ययास्तुल्यार्थेप्रत्ययसम्भा' इति दण्डी। एतेन कृशत्वं अनुकम्प्यत्वञ्च तस्यां सूच्यते। अङ्गलता अङ्गयष्टिः। क्रव्याद्भिः हिंस्रैः आममांसभक्षकैः वनचरैः नियतं निश्चितं विलुप्ता नाशिता। क्रव्यात्परिहरणे असामर्थ्यादन्यस्य सहायस्याऽभावाच्च। ज्योत्स्नामयीत्यनेन तेभ्यो निलयनाऽभावः द्योत्यते॥ २८॥

(ङ) ध्रियै जीवामि॥

रामः । हा प्रिये जानकि क्वासि ।

(क) **सीता** । हद्धी हद्धी अज्जउत्तो वि पमुक्ककण्ठं रोइदि । (१)

(ख) **तमसा** । वत्से साम्प्रतिकमेवैतत् कर्तव्यानि दुःखितैर्दुःखनिर्वापणानि । यतः

(ग) **पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया ।**
**शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ २९ ॥**

(घ) विशेषतो रामभद्रस्य बहुतरप्रकारकष्टो जीवलोकः ।

(ङ) **इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा**
**प्रियाशोको जीवं कुसुममिव घर्मः क्लमयति ।**
**स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-**
**स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥**

---

(१) हा धिक् हा धिक् आर्यपुत्रोऽपि प्रमुक्तकण्ठं रोदिति ।

---

(क) प्रमुक्तकण्ठं अत्युच्चैः ।

(ख) साम्प्रतिकं युक्तं । दुःखितैः पुरुषैः । दुःखस्य निर्वापणानि उपशमनानि ॥

(ग) **पूरोत्पीडेति** । तडागस्य पूरस्य तटद्वयमध्यवर्तिजलस्य उत्पीडे अत्यन्ताधिक्ये परीवाहः जलोच्छ्वासः जलनिर्गममार्गः । भाषायां साण्डइति प्रसिद्धः । प्रतिक्रिया प्रतिकरणं । वप्रसेतुपातनभयेन अन्यमार्गेण जलनिर्गमनमेव कार्यमित्यर्थः । इति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—शोकेति । क्षोभे अत्याधिक्ये । प्रलापैः प्रमुक्तकण्ठं रुदितैरेव धार्यते । अन्यथा हृदयनाशप्रसङ्ग इति भावः । दृष्टान्तालङ्कारः ॥ २९ ॥

(घ) विशेषतः बहुतराः अतिबहवः प्रकारा येषु तानि कष्टानि यस्मिन्सः । जीवलोकः मनुष्यलोकः ॥

(ङ) तदेवाऽह—**इदमिति** । अभियुक्तेन सावधानेन मनसा इदं विश्वं सर्वं जगत् विधिवत् पाल्यं रक्षणीयं । 'क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनं' इत्युक्तेः प्रजापालनस्य स्वधर्मत्वादिति भावः । प्रियाशोकः प्रियाविरहजन्यः शोकः जीवं घर्मः निदाघः कुसुममिव क्लमयति ग्लपयति । ग्लास्नोति मित्वे ह्रस्वः । स्वयं त्यागं कृत्वा विलपनमेव विनोदः क्रीडा । यद्वा विलपनेन रोदनेनैव यो विनोदः शोकाप-

रामः । कष्टं भोः कष्टम् ।

(क) दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥

सीता । एव्वण्णेदं । (१)
रामः । हे भवन्तः पौरजानपदाः ।

(ख) न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न वाप्यनुशोचिता ।

(१) एवन्विदम् ।

नोदनं सोऽपि असुलभः अतिदुर्लभः । रोदनेनाऽपि शोकोऽपनेतुं न शक्य इति भावः । तत्तते हेतोः अद्याऽपि एवंविधविरहे सत्यपि उच्छ्वासो जीवितं भवति तिष्ठति मरणे हि अहं दुःखान्मुच्येयं तत्तु न भवति । अतः जीवधारणार्थं रुदितमेव लाभो ननु । एतेन 'शोकक्षोभे' इति पूर्वोक्तिर्दृढीकृता । शोकापनोदनाभावेऽपि जीवनधारणैकफलत्वाद्रोदनं न निष्फलमिति भावः ॥ ३० ॥

(क) दलतीति । गाढः अत्यन्तः उद्वेगः यस्य तत् हृदयं दलति विदीर्णं भवति, द्विधा तु न भिद्यते । विकलः कायः मोहं वहति, चेतनां तु जीवितं न मुञ्चति । अन्तर्दाहः तनुं शरीरं ज्वलयति, भस्मसात् कृत्स्नां तनूं भस्म न करोति । 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः । मर्मच्छेदी मर्माणि जीवितस्थानानि छिनत्ति सः विधिः मद्दैवं एवं प्रहरति, जीवितं न कृन्तति न छिनत्ति । 'कृती छेदने' तौदादिकः 'शेमुचादीनां' इति नुम् । द्विधा भेदनादिना एतद्देहत्यागसम्भवेन सुखलाभोऽपि सम्भवेत्परन्तु तदेव तु दुर्लभमिति भावः ॥ ३१ ॥

(ख) न किलेति । देव्याः गृहे स्थानं अवस्थानं नाऽभिमतं किल न इष्टं किल ततः । भवदनभिमतत्वात् शून्ये जनरहिते वने देवी तृणमिव त्यक्ता इति अनेन भवदनुसरणमात्राऽर्थिना मम तस्यामत्यादरणीयता व्यज्यते । अनुत्यागोत्तरमपि न शोचिता । चि-रपरिचिताः चिरं परिचिताः अभ्यस्ताः ते ते पूर्वानुभूताः भावाः पदार्थाः मा परिद्रवयन्ति पारितः द्रववन्तं कुर्वन्ति । द्रववच्छब्दात्तत्करोतीति णिच् मतुब्लोपे टिलोपे रूपं । हृदि-

चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-
मिदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ ३२ ॥

(क) तमसा । अतिगम्भीरमवगूरणं शोकसागरस्य ।
(ख) वासन्ती । देव अतिक्रान्ते धैर्यमवलम्ब्यताम् ।
रामः । सखि किमुच्यते धैर्यमिति ।

(ग) देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रनष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥

सीता । मोहिदह्मि एदेहिं अज्जउत्तवअणेहिं । (१)
तमसा । एवं वत्से ।

(घ) नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥३४॥

रामः । अयि वासन्ति मया खलु ।

---

(१) मोहितास्म्येतैरार्यपुत्रवचनैः ।

---

तवन्तं अश्रुमन्तञ्च कुर्वन्तीत्यर्थः । अशरणै रोदनादन्यत्स्वरक्षकमपश्यद्भिः अस्माभिः रुद्यते । प्रसीदत रोदनं अभ्यनुजानीत । प्रियात्यागसमये भवदपवादभीत्या न रुदितं अधुना तत्तदनुभूतभावदर्शनेन शोकोद्दीपनान्मया रुद्यते । प्रसीदतेति प्रार्थनायां लोट् । यद्वा अशरणः पुरुषः एवं अद्याऽपि रुद्यते अतो मयाऽपि रुद्यते प्रसीदत । अतो मामित्येकवचनं अशरणैरिति बहुवचनं च सङ्गच्छते । यद्वा एवं निर्देशः चित्तव्याक्षेपसूचकत्वाद्विप्रलम्भपोषक एवेति न दोषः ॥ ३२ ॥

(क) अवगूरणं मर्यादामतिक्रम्य गमनं । अतिवृद्धिरिति यावत् ॥

(ख) धैर्यमवलम्ब्यतामिति किमुच्यते धैर्यावलम्बनस्य मया पराकाष्ठा कृतेति भावः ॥

(ग) देव्येति । नामाऽपि सीतेति नामाऽपि । रामो न जीवतीति न अपि तु जीवति । इतोऽधिकं धैर्यावलम्बनं किमुपदिशसीति भावः ॥ ३३ ॥

(घ) नैता इति । यतः स्नेहार्द्रा अपि यतः शोकेन दारुणाः अतः एताः वाचः न प्रियतमाः । स्नेहार्द्रत्वेन प्रिया अपि अतिशयेन न प्रियाः शोकदारुणत्वात् । एताः ताः

(क) यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥

(ख) सीता । एवं ह्मि मन्दभाइणी पुणो वि आआसआरिणी अज्जउत्तस्स । (१)

(ग) रामः । एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मम संस्तुतबहुतरप्रियदर्शनादुद्दामोऽयमावेगः । तथाहि ।

(घ) लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तंभनार्थं
यो यो यत्नः कथमपि मयाऽऽधीयते तं तमन्तः ।

(१) एवमस्मि मन्दभागिनी पुनरप्यायासकारिण्यार्यपुत्रस्य ।

मधुनो धाराः सविषास्तथापि श्च्योतन्ति क्षरंति । शोकसम्पृक्तत्वेन सविषत्वं स्नेहार्द्रत्वेन च मधुधारात्वं बोध्यं ॥ ३४ ॥

(क) यथेति । यथा अन्तःकरणे तिरश्चीनं वक्रं अलातशल्यं बाणशकलं । सविषः विषाक्तः दंशः सर्पादिकृतः । च इवाऽर्थेऽव्ययानां अनेकार्थत्वात् । प्रत्युप्तं भवति 'नपुंसकमनपुंसकेन'—इत्येकशेषः । प्रत्युप्तं प्रत्युप्तश्च । निहतमित्यर्थः । तथैव तीव्रः दुःसहः हृदि हृदये निहितः शोकशङ्कुः शोकरूपः शंकुः कीलः शल्यं वा । मर्माणि जीवस्थानानि कृन्तन् छिन्दन्नपि । किं एतावत्कालं न सोढः अपि तु सोढ एव । अधुना सहे पश्चादपि सहिष्ये इति भावः ॥ ३५ ॥

(ख) आयासकारिणी क्लेशदायिनी ॥

(ग) अतिनिष्कम्पस्तम्भितान्तःकरणस्य एवं धैर्यावलम्बनेन अतिनिष्कम्पं निश्चलं यथा तथा स्तम्भितं स्थिरीकृतं अन्तःकरणं मनो येन तस्य । संस्तुतानां परिचितानां बहुतराणां प्रियाणां वस्तूनां दर्शनात् । उद्दामः अतिशयितः आवेगः शोकसंवेगः ॥

(घ) लोलेति । लोलाः चञ्चलाः उल्लोलाः महान्तः तरङ्गाः यस्य तथाविधस्य क्षुभितस्य क्षोभं प्राप्तस्य करुणस्य शोकस्थायिभावस्य करुणनाम्नो रसस्य यत् उज्जृम्भणं अतिशयिता वृद्धिः तस्य स्तम्भनार्थं प्रतिबन्धार्थं यो यो यत्नः मया कथमपि आधीयते स्थाप्यते । समुद्रस्तम्भनवत्तस्य प्रतिबन्धकरणमेवाऽशक्यमिति सूच्यते ।

**भित्वा भित्वा प्रसरति बलात् कोऽपि चेतोविकार-**
**स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥**

(क) **सीता** । एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुःखसंखोहेण पप्फुरिदणिअदुक्खं विअ आकंपिदं मे हिअअम् । (१)

(ख) **वासन्ती** । (स्वगतम्) कष्टमभ्यापन्नो देवस्तदन्यतः क्षिपामि तावत् (प्रकाशम्) चिरपरिचितानामिदानीं जनस्थानभागानामवलोकनेनात्मानमानन्दयतु देवः ।

**रामः** । एवमस्तु । (इत्युत्थाय परिक्रामति) ।

**सीता** । सन्दीवणाइं ज्जेव दुःखस्स पिअसहीविणोदणोवाओ त्ति मण्णेदि । (२)

**वासन्ती** । (सकरुणम्) देव देव ।

(ग) **अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः**
**सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि ।**

---

(१) एतेनार्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रस्फुरितनिजदुःखमिवाकंपितं मे हृदयम् ।

(२) सन्दीपनान्येव दुःखस्य प्रियसखीविनोदनोपाया इति मन्यते ।

---

तं तं यत्नं अन्तः मध्ये भित्वा भित्वा पुनःपुनः भित्वा कोऽपि अनिर्वचनीयः चेतोविकारः शोकावेगः बलात् प्रसरति बहिर्निःसरति । तोयस्य जलस्य अप्रतिहतरयः अप्रतिहतः अकुण्ठितो रयो वेगो यस्य सः ओघः प्रवाहः सैकतं वालुकामयं सेतुमिव । एतेन पुनःपुनःक्रियमाणानामपि शोकस्तम्भनयत्नानां दौर्बल्यं सैकतसेतुवत् शोकावेगस्य च जलौघवदतिप्राबल्यं । तेन तेषां यत्नानां नैष्फल्यं फलितम् ॥ ३६ ॥

(क) दुर्वारः अनिवार्यः दारुणः दुःसहः आरम्भो यस्य तेन । अन्योऽपि दुःखितं दृष्ट्वा स्वदुःखं स्मरतीति भावः ॥

(ख) अभ्यापन्नः प्राप्तः । अन्यतः क्षिपामि विषयान्तरव्यासक्तं करोमि ॥

(ग) **अस्मिन्निति** । तन्मार्गदत्तेक्षणः तस्याः सीतायाः मार्गाय प्रत्यागमनमार्गदर्शनार्थं दत्ते ईक्षणे नयने येन । गोदावरीदर्शनाय गमने सीतया कृते आगमन-

आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ ३७ ॥

(क) सीता । दारुणा सि सहि वासन्दि दारुणा सि जा एदेहिं हिअअमम्मगूढसल्लघट्टणेहिं पुणो पुणो मं मन्दभाइणिं अज्जउत्तं अ सन्दावेसि । (१) 370

(ख) रामः । चण्डि जानकि इतस्ततो दृश्यस एव न चानुकम्पसे ।

(ग) हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।

---

(१) दारुणाऽसि सखि वासन्ति दारुणाऽसि । या एतैर्हृदय-मर्मगूढशल्यघट्टनैः पुनः पुनर्मां मन्दभागिनीमार्यपुत्रं च सन्तापयसि ।

---

विलम्बे सोत्कण्ठं तन्मार्गप्रतीक्षणं इत्याशयः । सा सीता गोदावरीरोधसि तत्तटे हंसैः कृतं जनितं कौतुकं यस्याः । आयान्त्या आगच्छन्त्या तया सीतया परिदुर्मनायितं परितः दुर्मना इव आचरति तथा भूतं । दुर्मनश्शब्दात् 'भृशादिभ्य' इति क्यचि सलोपे 'अकृत्सार्व' ति दीर्घे तदन्तात् क्तप्रत्यये इडागमे रूपं । नितान्तं खिन्नान्तःकरणमित्यर्थः । कातर्यात् त्रासात् । अरविन्दस्य रक्तोत्पलस्य कुड्मलं कलिका तत्तुल्यः मुग्धः सुन्दरः प्रणामाञ्जलिः नमस्कारार्थे अञ्जलिर्बद्धः । स्वकृतविलंबतः त्वद्दौर्मनस्यदर्शनेन ईषत्कोपमुत्प्रेक्षीय प्रसादाय अञ्जलिं बध्वा प्रणतेति भावः ॥ ३७ ॥

(क) हृदयमर्मगूढशल्यघट्टनैः हृदयमेव मर्म तस्मिन् गूढं यच्छल्यं शोकशंकुरूपं तस्य घट्टनैः चालनैः । मर्मशैरिति पाठे तत्तुल्यैः ॥

(ख) न चाऽनुकम्पसे न दयसे ॥

(ग) **हाहेति** । हे देवि । हाहा इति शोकव्यञ्जकं द्विर्भूतमव्ययं । हृदयं स्फुटति विशीर्यते । देहबन्धः ध्वंसते शिथिलो भवति । इदं जगत् भुवनं पृथ्वीलोकः शून्यं सर्वप्राणिरहितमस्तीति अहं मन्ये । त्वया विना कृतत्वादिति भावः । अविरतज्वालं अविरतं अनिशं ज्वाला यस्मिन्कर्मणि यथा तथा ज्वलामि दीप्ये इत्यर्थः । अन्धे अन्धयति दृष्टिमुपहंतीत्यन्धं तस्मिन् 'अन्धदृष्टयुपघाते' पचाद्यच् । गाढे इत्यर्थः । तमसि अन्धकारे विधुरः प्रियारहितः । अन्तरात्मा अन्तः मज्जतीव मोहसमुद्रे मग्नो भवतीव । मोहः विष्वक् सर्वतः स्थगयति आवृणोति । किमपि वस्तुजातं न दृश्यते इति भावः । एवं स्थिते मन्दभाग्यः भाग्यहीनोऽहं कथं करोमि केन प्रका-

**सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा**
**विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥**

(इति मूर्च्छति)

(क) **सीता** । हद्धी हद्धी पुणो वि प्पमूढो अज्जउत्तो । (१)

**वासन्ती** । देव समाश्वसिहि समाश्वसिहि ।

(क) **सीता** । हा अज्जउत्त म मन्दभाइणिं उद्दिसिअ सअलजीअलोअमङ्गलाधारस्स दे वारंवारं संसइदजीविददारुणो दसापरिणामोत्ति हा हद म्हि । (२) (इति मूर्च्छति)

**तमसा** । वत्से समाश्वसिहि समाश्वसिहि । पुनस्त्वत्पाणिस्पर्श एव संजीवनोपायो रामभद्रस्य ।

(ख) **वासन्ती** । कथमद्यापि नोच्छ्वसिति । हा प्रियसखि सीते क्वासि संभावयात्मनो जीवितेश्वरम् ।

**सीता** । (ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति) ।

(ग) **वासन्ती** । दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः ।

---

(१) हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्रः ।

(२) हा आर्यपुत्र मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमंगलाधारस्य ते वारंवारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि ।

---

रेण जीवितं धारयामि । प्रियतमाप्राप्तौ कमुपायमवलम्बे इति न जानामीति भावः ॥ ३८ ॥

(क) संशयितजीवितदारुणः संशयितं संशयं प्राप्तं जीवितं यस्मिन्तथाभूतः अत एव दारुणः भयङ्करः दशापरिणामः दशायाः अवस्थायाः परिणामः परीपाकः अस्मिन् दशापरीपाके रामो जीवेन्नवेति संशयो भवति स च भयमावहतीत्यर्थः ॥

(ख) जीवितेश्वरं । तस्य जीवितसंशये तवाऽपि जीविते संशयोऽतस्त्वं तं जीवयेति भावः ॥

(ग) प्रत्यापन्ना प्राप्ता चेतना यस्य ॥

(क) रामः । आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥ ३९ ॥

(आनन्दनिमीलिताक्ष एव) सखि वासन्ति दिष्ट्या वर्धसे ।

वासन्ती । देव कथमिव ।

रामः । सखि किमन्यत्, पुनः प्राप्ता जानकी ।

वासन्ती । अयि देव क्व सा ।

रामः । (स्पर्शसुखमभिनीय) पश्य नन्वियं पुरत एव ।

(ख) वासन्ती । अयि देव किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि पुनर्मन्दभागिनीं दहसि माम् ।

(ग) सीता । ओसरिदुं इच्छामि । एसो उण चिरसब्भावसोम्मसीअलेण अज्जउत्तप्फंसेण दीहदारुणं वि सन्दावं हरन्तेण वज्जलेवोवणिवद्धो विअ सिज्जन्तणीसहविपल्हत्थो वेअणसीलो अवसो विअ मे हत्थो । (१)

(१) अपसर्तुमिच्छामि । एष पुनश्चिरसद्भावसौम्यशीतलेनार्यपुत्रस्पर्शेन दीर्घदारुणमपि सन्तापं हरता वज्रलेपोपनिबद्ध इव स्विद्यन्निःसहविपर्यस्तो वेपनशीलोऽवश इव मे हस्तः ।

---

(क) आलिम्पन्निति । शरीरधातून् शरीरसम्बन्धिनः त्वगादीन् धातून् । अंतर्वा बहिरपि वा । वाशब्दश्चार्थे । अंतर्बहिश्च । अमृतमयैः प्रलेपैरिव आ सर्वतः लिम्पन् लिप्तान्कुर्वन् अकस्मात् संस्पर्शः पुनरपि जीवयन् । जानकीदर्शनाभावादकस्मादिति निर्देशः । आनन्दादपरविधं अत्यन्तविलक्षणं मोहं तनोति विस्तारयति ॥ ३९ ॥

(ख) मर्मच्छेददारुणैः मर्मणां छेदनं कर्तनं अतिव्यथा तया दारुणैः दुःसहैः प्रलापैः अर्थशून्यैः सीताया अभावेऽपि पश्य नन्वियं पुरत एवेत्यादिभिर्वचनैः ॥

(ग) चिरसद्भावसौम्यशीतलेन चिरं बहुकालं सन् स्थितः भावः मनोभिप्रायः अनुरागरूपः तेन सौम्यः सुखकरः शीतलश्च तेन दीर्घदारुणं दीर्घं बहुकालिकं दारुणं

रामः । सखि कुतः प्रलापाः ।

(क) गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः
चिरं स्वैरिच्छास्पर्शैरमृतशिशिरैर्यः परिचितः ।

(ख) सीता । अज्जउत्त सो ज्जेव दाणिं सि तुमं । (१)

(ग) रामः । स एवायं तस्यास्तुहिनकरकौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥

(इति गृह्णाति)

सीता । हद्धी हद्धी अज्जउत्तप्फंसमोहिदाए पमादो क्खु मे संवुत्तो । (२)

---

(१) आर्यपुत्र स एवेदानीमसि त्वम् ।

(२) हा धिक् हा धिक् आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः ।

---

दुःसहं च । झटिति उत्पतता नाशयता । वज्रलेपेन वज्रबन्धेन उपनद्धः बद्धः । अतितरबद्ध इति यावत् । स्विद्यन् स्वेदयुक्तो भवन् । नितान्तं विपर्यस्तः जाड्यं प्राप्तः अतोऽपसर्पणं दुःशकमिति भावः ॥

(क) **गृहीत इति** । परिणयविधौ विवाहसमये कङ्कणधरः कङ्कणं माङ्गलिकसूत्रं तस्य धरः यः पूर्वं गृहीतः अमृतशिशिरैः अमृतमिव शिशिराः शीतलाः तैः स्वेच्छास्पर्शैः स्वेच्छामात्रकृतैः स्पर्शैः चिरं बहुकालं यः परिचितः अनुभूतः ॥

(ख) आर्यपुत्र इदानीं त्वं स एवाऽमि । तव तु अनुरागस्तथाविध एव दृश्यते मद्भाग्यदोषवशादेव मां त्यक्तवानसीति भावः । यद्वा काका स एवाऽसि त्वं अपि तु नाऽसि यतो मां त्यक्तवानमि अधुना तु अनुरागातिशयं दर्शयसि अहो ते वैचित्र्यमिति भावः ॥

(ग) **सेति** । तस्याः सीतायाः तुहिनाः शीतलाः करकाः वर्षोपलाः तेन यत् औपम्यं सादृश्यं तेन सुभगः सुन्दरः । लवलीकन्दलस्य लवलीनवाङ्कुरस्य तुल्यः । विशेषणद्वयेन अस्य मार्दवञ्च द्योत्यते । पाणिर्मया लब्धः ॥ ४० ॥

(क) रामः । सखि वासन्ति आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि तत् त्वं तावदेनां धारय ।

वासन्ती । कष्टम् उन्माद एव ।

सीता । ( ससंभ्रममाक्षिप्य अपसर्पति ) ।

रामः । हा धिक् प्रमादो हा धिक् प्रमादः ।

(ख) **करपल्लवः स तस्याः सहसैव जडाज्जडः परिभ्रष्टः ।**
**परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥**

(ग) सीता । हद्धी हद्धी अज्ज वि अणवत्थिदत्थिमिदमूढघुण्णंतणअणो ण पज्जवत्थावेदि अत्ताणअं । (१)

तमसा । ( सस्नेहं निर्वर्ण्य ) ।

(घ) **सस्वेदरोमाञ्चितकम्पिताङ्गी**
**जाता प्रियस्पर्शसुखेन वत्सा ।**

---

(१) हा धिक् हा धिक् अद्याप्यनवस्थितस्तिमितमूढघूर्णमाननयनो न पर्यवस्थापयत्यात्मानम् ।

---

(क) आनन्दनिमीलितेन्द्रियः आनन्देन स्पर्शजन्यसुखातिशयेन निमीलितानि स्वस्वकार्याक्षमाणि इन्द्रियाणि ज्ञानेन्द्रियाणि चक्षुरादीनि कर्मेन्द्रियाणि वागादीनि च यस्य सः साध्वसेन भयेन तज्जन्यकम्पेन परवान् पराधीनः तां धारयितुमशक्नुवन् ॥

(ख) **करेति** । सः तस्याः करपल्लवः मम करात्परिभ्रष्टः । कीदृशात्कीदृशः । जडात् जडः स्तब्धात् स्तब्धः । परिकम्पिनः प्रकम्पी सकम्पात् सकम्पः । स्विद्यतः स्विद्यन् सघर्मात् सघर्मः । एतेन उभयोरन्योन्यस्पर्शसम्भूतस्तम्भादिसात्त्विकभाववर्णनात् परिपुष्टो रत्याख्यः स्थायिभावः शृङ्गाररसतां प्राप्तः इति रसप्राधान्यात् ध्वनिरयम् ॥ ४१ ॥

(ग) **अनवस्थितेति** । अनवस्थिते चञ्चले स्तिमिते बाष्पार्द्रे मूढे व्यापाररहिते घूर्णमाने नयने यस्य सः । न पर्यवस्थापयति प्रकृतिस्थं न करोति ॥

(घ) **सस्वेदेति** । सस्वेदानि सञ्जातरोमाञ्चानि कम्पितानि अङ्गानि यस्याः सा अत्र कम्पिताङ्गेति पाठो युक्तः संयोगोपधत्वेन ङीपो दौर्लभ्यात् । अनेन सात्त्विको-

मरुन्नवाम्भःप्रविधूतसिक्ता
कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

(क) **सीता** । (स्वगतम्) अम्महे अवसेण एदेण अत्ताणएण लज्जाविद ह्मि भअवदीए तमसाए किं त्ति किल एसा मणिस्सदि एसो परिच्चाओ एसो अहिसंगो त्ति । (१)

**रामः** । (सर्वतोऽवलोक्य) कथं नास्त्येव । नन्वकरुणे वैदेहि ।

(ख) **सीता** । सच्चं अकरुण ह्मि जा एवंविधं तुमं पेक्खन्ती णं धरामि ज्जेव जीविदं । (२)

(ग) **रामः** । क्वासि देवि प्रसीद न मामेवंविधं परित्यक्तुमर्हसि ।

(घ) **सीता** । अइ अज्जउत्त विपरीदं विअ एदं । (३)

---

(१) अम्महे अवशेनैतेनात्मना लज्जाऽऽपिताऽस्मि भगवत्या तमसया किमिति किलैषा मंस्यत एष परित्याग एषोऽभिषंग इति ।

(२) सत्यमकरुणास्मि या एवंविधं त्वां प्रेक्षमाणा ननु धराम्येव जीवितम् ।

(३) अयि आर्यपुत्र विपरीतमिवैतत् ।

---

द्रुमेन रसाविष्टत्वं द्योत्यते । तत्र दृष्टान्तः मरुदिति मरुच्च नवाम्भश्च ताभ्यां वायुवर्षोदकाभ्यां क्रमेण प्रविधूता कम्पिता सिक्ता च । अयं प्रयोगः असङ्गतः यथासंख्येनान्वये असामर्थ्येन समासासम्भवात् । स्फुटकोरका स्फुटाः कोरकाः कलिकाः यस्याः सा कदम्बयष्टिरिव । इयं पूर्णोपमा ॥ ४२ ॥

(क) अवशेन आनन्दपरवशेन आत्मना स्वेदादियुक्तेन ममैव देहेन लज्जापिता लज्जां आपिता प्रापिता । प्रियस्पर्शमात्रेण उद्गतैः रोमाञ्चादिभिः अनया प्रियानुरागोऽनुमित इति भावः । अभिषङ्गः संसर्गः अनुराग इति यावत् । परित्यागानुरागयोश्च तेजस्तिमिरयोरिव सामानाधिकरण्यं दुर्घटमिति भावः । आत्मनेति हेतौ तृतीया । तमसयेति प्रयोजके कर्तरि आपितेति णिजन्तात्क्तः ॥

(ख) एवंविधं शोकेन व्याकुलं । धराम्येव जीवितं न तु त्यजामि । दुःखितस्य तव दर्शने प्राणत्यागप्रसङ्गे जीवितधारणं अकारुण्यं व्यञ्जयतीति भावः ॥

(ग) एवंविधं दशमीं कामावस्थामापन्नं ॥

(घ) विपरीतं । त्वया परित्यक्तत्वेन मयि त्यागारोपणं विपरीतमिति भावः ॥

(क) वासन्ती । देव प्रसीद प्रसीद स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिगतविप्रलम्भमात्मानम् । कुतोऽत्र मे प्रियसखी ।

(ख) रामः । व्यक्तं नास्ति कथमन्यथा वासन्त्यपि तां न पश्येत् । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो वा रामभद्रस्य निद्रा । सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनःपुनरनुबध्नाति माम् ।

(ग) सीता । मए ज्जेव दारुणाए विप्पलद्धो अज्जउत्तो । (१)

वासन्ती । देव पश्य पश्य ।

(घ) पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः
पश्यैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः ।

---

(१) मयैव दारुणया विप्रलब्ध आर्यपुत्रः ।

---

(क) अतिभूमिगतविप्रलम्भम् । भूमिशब्दो लक्षणया वृद्धिपरः अतिभूमिं वृद्धिं प्राप्तः विप्रलम्भः प्रियाविरहजः शोको यस्य तं । संस्तम्भय अवष्टब्धं कुरु । कुतोऽत्र मे प्रियसखी तस्या अत्र स्थितौ नास्ति हेतुरित्यर्थः ॥

(ख) न चाऽस्मि सुप्तः । स्वापं विना जागरितवासनाजन्यस्य स्वप्नस्याऽसम्भवात् । भगवान् ऐश्वर्यवान् वीर्यवान् माहात्म्यवान् वा । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्य-मुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीयत्नभानुषु' इति विश्वः । अनेकवारं पुनः-पुनः परिकल्पनाभिः तत्समागमादिकल्पनाभिः निर्मितः उत्पादितः विप्रलम्भः शृंगारः मां पुनःपुनः अनुबध्नाति अनुसरति । विप्रलम्भ एव पुनःपुनः सीतां निर्माय तया सह समागमं च संसाध्य मां प्रतारयतीति भावः ॥

(ग) विप्रलब्धः वञ्चितः विप्रलम्भं प्रापितः कराकर्षणादितिशेषः ॥

(घ) पौलस्त्येति । कार्ष्णायसः कृष्णञ्च तदयश्च लोहञ्च कृष्णायसं तेन कृतः कार्ष्णायसः । शैषिकोऽण् । विघटितो नाशितः एते पिशाचवदनाः पिशाचानां वद-नानीव वदनानि येषां ते खराः विघटिताः नाशिताः । विघटित इति वचनविपरिणामेन सम्बध्यते । अत एव कङ्कालशेषाः कङ्कालानि अस्थीन्येव शेषा येषां । बहुकालेन मांसानां क्रव्याद्भिर्भक्षितत्वात् । इति पश्य । वाक्यस्य कर्मता । तेषां विघटनं पश्येत्यर्थः । जटायोः पक्षतिः पक्षमूलं । मूल इत्यनुवर्तमाने 'पक्षात्तिः' इति ति-प्रत्ययः । इतः अस्मिन्प्रदेशे अस्ति पश्य । 'विद्यादायुं तथायुषा' इति द्विरूपकोशा-त्सान्त उदन्तश्च जटायुशब्दः । जटाः पक्षमूलमेव आयुरस्येत्यर्थः । यद्वा जटया सह

**खड्गच्छिन्नजटायुपक्षतिरितः सीतां ज्वलन्तीं वह-**
**न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४३ ॥**

(क) **सीता ।** (सभयम्) अज्जउत्त तादो वावादिअदि अहं अ अव-हरीआमि । परित्ताहि परित्ताहि । (१)

(ख) **रामः ।** (सवेगमुत्थाय) आः पाप तातप्राणसीतापहारिन् क्व यासि ।

(ग) **वासन्ती ।** अयि देव राक्षसकुलप्रलयधूमकेतो अद्यापि ते मन्युविषयः ।

(घ) **सीता ।** अम्मो उम्मत्त ह्मि संवुत्ता । (२)

(ङ) **रामः ।** अन्वर्थ एवायमधुना प्रलापो वर्तते ।

---

(१) आर्यपुत्र तातो व्यापाद्यतेऽहंचापन्हियेे । परित्रायस्व परित्रायस्व ।

(२) अहो उन्मत्तास्मि संवृत्ता ।

---

यातीति जटायुः । मृगय्वादित्वात्कुप्रत्ययः । अन्तर्व्याकुलविद्युत् अन्तः मध्ये व्याकुला चञ्चला विद्युत् यस्य सः मेघः इव अरी रावणः ज्वलन्तीं स्वपातिव्रत्यतेजसा भासमानां सीतां वहन् अभ्युदस्थात् प्रस्थितः । यद्वा अभि भयरहितं यथा तथा इति क्रियाविशेषणं । रामलक्ष्मणयोः मारीचिनापकर्षणाज्जटायोर्नाशाच्च भयराहित्यं । उदस्थात् ऊर्ध्वं अगच्छत् । 'उदोऽनूर्ध्वकर्मणि' इति निषेधान्नात्मनेपदम् ॥ ४३ ॥

(क) तातः जटायुः । अनुकम्पायां तातशब्दप्रयोगः । व्यापाद्यते छिद्यते रावणेनेति शेषः । रावणभयेन नामानुच्चारणं । अहं च अपन्हिये । अयं च कालविस्मरणरूपो व्यभिचारीभावः ॥

(ख) आः 'आः स्यात्कोपप्रपीडयोः' इति कोपव्यञ्जकमव्ययं । तातप्राणसीतापहारिन् तातस्य जटायोः प्राणाः सीता च ते उभे अपहर्तुं शीलं यस्य तथाविध त्वं क्व यासि । न मत्तो जीवन् मोक्ष्यसे इति भावः ॥

(ग) अद्यापि ते मन्युविषयः मन्योः क्रोधस्य विषयः । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । सर्वेषां राक्षसानां निःशेषं नाशितत्वात् ते क्रोधविषयो नास्तीति भावः ॥

(घ) उन्मत्ता उन्मादावस्थां प्राप्ता । इयं कामस्य अष्टमी अवस्था ॥

(ङ) प्रलापः अनर्थकं वचः । सीताया अभावेन रावणादीनां नाशितत्वेन सर्वमिदं मद्वचनमनर्थकमिति भावः ॥

(क) उपायानां भावादविरतविनोदव्यतिकरै-
विमर्दै वीराणां जगति जनितात्यद्भुतरसः ।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरिदानीं तु विरहः ॥ ४४ ॥

सीता । णिरवधि त्ति हा हद ह्मि मन्दभाइणी । (१)

(इति रोदिति)

(ख) रामः । हा कष्टम् ।

(ग) व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिये क्वासि मे ॥ ४५ ॥

सीता । बहु मणाविद ह्मि तं पुव्वविरहं । (२)

---

(१) निरवधिरिति हा हतास्मि मन्दभागिनी ।
(२) बहु मानिताऽस्मि तं पूर्वविरहम् ।

---

(क) उपायानामिति । उपायानां उप समीपे आयः लाभो येषां तेषां सीतालाभसाधनानां दनुकबन्धोक्तशबरीसम्बोधितसुग्रीवसख्यादीनां भावात् सद्भावात् अविरतं निरन्तरं विनोदाः तत्तत्कालोपनतदुःखापनोदनानि तेषां व्यतिकराः सम्बन्धाः तैः । अयं वियोगसहने हेतुरुक्तः । वीराणां विमर्दे युद्धप्रसंगे जनितात्यद्भुतरसः जनितः अति अद्भुतः अद्भुतनामा रसो यस्मिन् । रामरावणयुद्धसदृशस्यान्यस्य विमर्दस्याऽभावात् । मुग्धाक्ष्याः सः पूर्वानुभूतः वियोगः रिपुघातावधिः रिपुघातो रावणघातः स एव अवधिर्यस्य तथाभूतः सह्योभूत् । इदानीं विरहस्तु तु शब्दः पूर्वस्माद्विरहाद्वैलक्षण्यं द्योतयति । तूष्णीं कथं सह्यः यतोऽयं निरवधिः । अत्र तूष्णीं भूय इति वक्तव्ये तथानुक्तिः विप्रलम्भशृंगारस्य पोषिका ॥ ४४ ॥

(ख) एतद्विरहप्रतीकाराभावमेवदर्शयन्नाह—हाकष्टमिति ।

(ग) व्यर्थमिति । वायोः पुत्रस्याऽपि हनूमतोऽपि । यत्र सौमित्रेः लक्ष्मणस्य पत्रिणां बाणानां अविषयः । मे प्रिये तत्र क्वाऽसि ॥ ४५ ॥

**रामः** । सखि वासन्ति सुहृदां दुःखायैवेदानीं रामस्य दर्शनं तदिदं कियच्चिरं त्वां रोदयिष्यति तदनुजानीहि मां गमनाय ।

**सीता** । (सोद्वेगमोहं तमसामवलम्ब्य) भअवदि तमसे कहं गच्छदि ज्जेव अज्जउत्तो । (१)

**तमसा** । वत्से समाश्वसिहि समाश्वसिहि । नन्वावामप्यायुष्मतोः कुशलवयोर्वर्षवर्धनमङ्गलानि सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः ।

**सीता** । भअवदि तमसे पसीद खणमेत्तं वि दाव दुल्लहं जणं पेक्खामि । (२)

**रामः** । अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे ।

**सीता** । (सोत्कम्पम्) अज्जउत्त का सा । (३)

**रामः** । हिरण्मयी सीतायाः प्रतिकृतिः ।

**सीता** । (सोच्छ्वासं सास्रम्) अज्जउत्तो दाणिं सि तुमं । अम्महे उक्खाणिदं मे दाणिं परिच्चाअलज्जासल्लं अज्जउत्तेण । (४)

**रामः** । तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

**सीता** । धण्णा सा जा अज्जउत्तेण बहु मणाअदि जा अ अज्जउत्तं विणोदअन्ती आसाणिबन्धणं जादा जीअलोअस्स । (५)

**तमसा** । (सस्मितस्नेहास्रं परिष्वज्य) अयि वत्से एवमात्मा स्तूयते ।

**सीता** । (सलज्जमधोमुखी स्वगतम्) परिहसिद ह्मि भअवदीए तमसाए । (६)

---

(१) भगवति तमसे कथं गच्छत्येवार्यपुत्रः ।

(२) भगवति तमसे प्रसीद क्षणमात्रमपि तावद्दुर्लभं जनं प्रेक्षे ।

(३) आर्यपुत्र का सा ।

(४) आर्यपुत्र इदानीमसि त्वम् । अम्महे उत्खातं म इदानीं परित्यागलज्जाशल्यमार्यपुत्रेण ।

(५) धन्या सा याऽऽर्यपुत्रेण बहु मन्यते या चाऽऽर्यपुत्रं विनोदयन्ती आशानिबन्धनं जाता जीवलोकस्य ।

(६) परिहसितास्मि भगवत्या तमसया ।

(क) वासन्ती । महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति पुनर्यथा कार्यहानिर्न भवति तथाऽऽस्ताम् ।

(ख) सीता । पडिऊला दाणीं मे वासन्दी संवुत्ता । (१)

तमसा । एहि वत्से गच्छावः ।

सीता । (सकष्टम्) एवं करेह्म । (२)

तमसा । कथं वा गम्यते यस्यास्तव ।

(ग) प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।
मर्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ ४६ ॥

(घ) सीता । णमो णमो अपुव्वपुण्णजणिददंसणाणं अज्जउत्तचरणकमलाणं । (३) (इति मूर्च्छति)

तमसा । वत्से समाश्वसिहि समाश्वसिहि ।

(ङ) सीता । (समाश्वस्य) किअच्चिरं वा मेहम्तरेण पुण्णिमाचन्दस्स दंसणम् । (४)

---

(१) प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।

(२) एवं कुर्वः ।

(३) नमो नमोऽपूर्वपुण्यजनितदर्शनेभ्य आर्यपुत्रचरणकमलेभ्यः ।

(४) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

---

(क) महानयं व्यतिकरः अयं व्यतिकरः समागमः अस्माकं महान् प्रसादः । भवत्समागमलाभेनाऽहमनुगृहीताऽस्मि । अत एव ते गमनं न रोचये तथाऽपि यथा कार्यहानिः कार्यनाशो न भवति तथाऽऽस्ताम् ॥

(ख) प्रतिकूला रामगमनाभ्यनुज्ञानात् ॥

(ग) **प्रत्युप्तस्येति** । दयिते प्रिये रामे प्रत्युप्तस्य निखातस्य इव तृष्णया औत्सुक्येन दीर्घस्य दीर्घभावमापन्नस्येव ते चक्षुषः मर्मच्छेदपरैः मर्मच्छेदकारिभिर्यत्नैर्व्यापारैः आकर्षः आकर्षणं न समाप्यते । रामे दृष्टिपथस्थिते सति तस्माच्चक्षुषः आकर्षणं अतीव दुःशकमिति भावः ॥ ४६ ॥

(घ) अपूर्वेति । अपूर्वेण अत्यद्भुतेन पुण्येन जनितं दर्शनं येषां तेभ्यः । भाषायां चतुर्थ्यर्थे षष्ठी ॥

(ङ) मेघान्तरेण मेघव्यवधानेन पूर्णिमाचन्द्रस्य दर्शनं । तत्तुल्यं रामभद्रदर्शनमित्यतिशयोक्तिः । उपमेयनिगरणात् साध्यवसाना लक्षणा ॥

(क) तमसा। अहो संविधानकम्।

(ख) एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्त्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम्। ॥ ४७ ॥

रामः। अयि विमानराज इत इतः। (इति सर्वे उत्तिष्ठन्ति)।
तमसावासन्तौ। (सीतारामौ प्रति)।

(ग) अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता।
स च मुनिरनुयातारुन्धतीको वसिष्ठ-
स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

(इति निष्क्रान्ताः सर्वे)

(घ) इति छाया नाम तृतीयोऽङ्कः।

---

(क) संविधानकं कार्यकारणभाववैचित्र्यं। विलक्षणात्कारणात् विलक्षणं कार्य-मुत्पद्यते। एकस्मात्कारणादनेककार्योत्पत्तिरपि। इदमेव विधातुः कार्योत्पादन-वैचित्र्यं ॥

(ख) एक इति। एकः करुण एव रसः निमित्तभेदात् सीतारामाद्यालम्बनरूप-कारणभेदात् भिन्नः सन् पृथक् पृथक् इव भिन्नान् भिन्नानिव विवर्तान् परिणामान् आश्रयते अवलम्बते। आवर्तः अम्भसां भ्रमः बुद्बुदः जलवायुसंयोगजन्यः। तरङ्गाः वीचयः तन्मयान् विकारान् तद्रूपान् परिणामान् अम्भः सलिलमेव आश्रयते तत्समग्रं आवर्तादि सलिलमेव ॥ ४७ ॥

(ग) अवनिरिति। अवनिः पृथ्वी अमरसिन्धुः गङ्गा अस्मद्विधाभिः अस्मत्स-दृशीभिः। अस्मच्छब्देन तमसा। छन्दसां रामायणश्लोकानां आद्यः यः प्रयोक्ता सः कुलपतिः वाल्मीकिः अनुयातारुन्धतीकः अनुयाता सहधर्मचारित्वादनुगता अरुन्धती यस्य सः। बहुव्रीहेः कप् समासान्तः। स वशिष्ठो मुनिश्च। तच्छब्दस्य प्रसिद्धार्थत्वान्न यच्छब्दाकांक्षा। त्वयि रामे सीतायां च भूयसे मङ्गलाय इष्टलाभाय भद्रं कल्याणं वितरतु ददातु ॥ ४८ ॥

(घ) इति छायानाम। अत्राङ्के सीतायाः छायारूपेण वर्णनात् छायानामकत्वम् ॥

इति भावभूतार्थबोधिकायां तृतीयोऽङ्कः ॥

# चतुर्थोऽङ्कः ।

(क) ( ततः प्रविशतस्तापसौ )

(ख) एकः । सौधातके दृश्यतामद्य भूयिष्टसन्निधापितातिथिजनस्य समधिकाऽऽरम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि

(ग) नीवारौदनमण्डमुष्णमधुरं सद्यः प्रसूतप्रिया–
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

(घ) सौधातकिः । आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिण्णकुच्चाणं । (१)

---

(१) आगतमनध्यायकारणं सविशेषभूतमद्यजीर्णकूर्चानाम् ।

---

(क) कियत इति वृत्तस्य नीरसत्वेन सूच्यत्वमभिप्रेत्य विष्कम्भकेन तदवतारयति— तत इति ॥

(ख) सौधातके सुधातृनाम्नः ऋषेरपत्यं सौधातकिः तत्सम्बोधनं । बाह्वादित्वादिञ् 'सुधातुरकङ् च' इति अकङ् । भूयिष्ठसन्निधापितातिथिजनस्य भूयिष्ठं बहुलं सन्निधापिताः उपस्थापिताः अतिथिजनाः यस्मिन् तस्य । समधिकारम्भरमणीयता समधिकैः नित्यादभ्यधिकैः आरम्भैः पाकाद्यनुष्ठानैः रमणीयता मनोहरता ॥

(ग) तदेवाऽऽह — नीवारेति । नीवारस्य तृणधान्यस्य यः ओदनः तस्य मण्डः तं । पर्याप्तं यथास्यात्तथा तपोवनमृगः आचामति भक्षयति । पर्याप्तमिति मण्डविशेषणं वा । क्षुत्पिपासानिवृत्तिक्षममित्यर्थः । कीदृशं मण्डं उष्णमधुरं उष्णश्चासौ मधुरश्च तं । पुनः कीदृशं सद्यः प्रसूता चासौ प्रिया च तस्याः पीतं पानं तस्मादभ्यधिकं । उर्वरितमिति यावत् । पीतादभ्यधिकमित्यनेन पशुनाऽपि मृगेण स्वस्य क्षुत्पिपासयोर्विद्यमानयोरपि प्रियायाः सद्यः प्रसूतत्वेन स्नेहवशेन च तया मण्डपानं प्रथमतः कारितं पश्चात्स्वयं कृतमिति द्योत्यते । प्रसूतप्रियेत्यत्र 'पुंवत्कर्मधारये'— त्यादिना पुंवत् । अप्रियादिषु इति निषेधस्तु 'स्त्रियाः पुंवत्—' इत्यस्यैव । किं च सर्पिष्मतः प्रशस्तघृतयुक्तस्य भक्तस्य ओदनस्य गन्धेन सौरभेण कर्त्रा । कर्कन्धूः बदरी तस्याः फलैः मिश्राः ये शाकाः तेषां पचनस्य पाकस्य यः आमोदः अतिदूरगामी अतिमनोहरो वा गन्धः । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे । आमोदः सोतिनिर्हारि'— इत्यमरः । परिस्तीर्यते सर्वतः प्रसृतः क्रियते । कीदृशः आमोदः मनाक् अनुसृतः पाकशालातो बहिर्निर्गतः । ईषदभिसृतः शाकपचनामोदः सद्यस्तप्तगोघृतमिश्रौदनगन्धेन संवलितः सन् विवृद्धः प्रसृतः क्रियते इति भावः ॥ १ ॥

(घ) जीर्णकूर्चानां जीर्णाः कूर्चाः मुखलोमानि येषां तेषां सविशेषभूतं अत्यावश्यकं । अनध्यायस्य अध्ययनाभावस्य ॥

(क) **प्रथमः** । ( विहस्य ) अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके।

(ख) **सौधातकिः** । भो भाण्डाअण किंणामधेओ एसो महन्तस्स त्थविरसत्थस्स धुरन्धरो अज्ज चीरधारओ अदिधि आअदो । (१)

(ग) **भाण्डायनः** । धिक् प्रहसनम् नन्वयमृष्यशृङ्गाऽऽश्रमादरुन्धती-पुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान् वसिष्ठःप्राप्तस्तत् किमेवं प्रलपसि ।

(घ) **सौधातकिः** । हुं वसिट्ठो । (२)

(ङ) **भाण्डायनः** । अथ किम् ।

**सौधातकिः** । मए उण जाणिदं वग्घो वा विओ वा एसो त्ति । (३)

**भाण्डायनः** । आः किमुक्तं भवति ।

(च) **सौधातकिः** । तेण परावडिदेण ज्जेव सा वराइआ कल्लोडिआ मडमडाइदा । (४)

---

(१) भो भाण्डायन किन्नामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्य चीरधारकोऽतिथिरागतः ।

(२) हुं वसिष्ठः ।

(३) मया पुनर्ज्ञातं व्याघ्रो वा वृको वैष इति ।

(४) तेन परापतितेनैव सा वराकिका कल्लोडिका मडमडायिता ।

---

(क) कूर्चशब्दस्य ग्राम्यस्य गुरुषु प्रयोगेण विहासः । अपूर्वः असाधारणः । कोऽपि लोकोत्तरः बहुसंमानहेतुः बहुलसंमानस्य कारणमस्ति । गुरुषु गौरवादेवं तत्र प्रयोगोऽनुचित इति भावः ॥

(ख) भाण्डायन भण्डस्य महर्षेर्युवाऽपत्यं । भण्डशब्दाद्गर्गादियञन्तात् यून्यपत्ये 'यञिञोश्च' इति फक् । धुरन्धरः अग्रेसरः ॥

(ग) धिक् प्रहसनं । प्रहासो न कार्य इत्यर्थः । दारानधिष्ठाय कौसल्यादीन् दारान् गृहीत्वा ॥

(घ) हुं वितर्के ॥

(ङ) अथ किम् निश्चये । वशिष्ठ एवेति भावः ॥

(च) वराकिका दीना । कल्लोडिका वत्सतरी । मडमडायिता भक्षिता । कल्लोडि-केति वत्सतर्यां मडमडायितेति भक्षितायां च देशीभाषायाम् ॥

(क) भाण्डायनः । समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिन इति हि धर्मसूत्रकाराः समामनन्ति ।

(ख) सौधातकिः । भो णिग्गिहिदोसि । (१)

भाण्डायनः । कथमिव ।

(ग) सौधातकिः । जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा । अज्ज ज्जेव पच्चागदस्स राएसिणो जणअस्स भअवदा वम्मीएण वि दहिमहूहिं ज्जेव णिव्वत्तिदो महुवक्को । वच्छदरी उण विसज्जिदा । (२)

(घ) भाण्डायनः । अनिवृत्तमांसानामेवंकल्पमृषयो मन्यन्ते निवृत्तमांसस्तु तत्रभवान् जनकः ।

---

(१) भो निगृहीतोऽसि ।

(२) येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता । अद्यैव पर्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिनापि दधिमधुभिरेव निर्वर्तितो मधुपर्को वत्सतरी पुनर्विसर्जिता ।

---

(क) समांसो मधुपर्कः दधिघृतयुतं मधु समांसः मांसेन सहितः अतिथये देयः इति आम्नायं वेदं बहुमन्यमानाः प्रमाणीकुर्वन्तः श्रोत्रियाय वेदविदे अभ्यागताय अतिथये वत्सतरीं द्विहायनीं महोक्षं महांश्चासौ उक्षा वृषभश्च तं । 'अचतुर'—त्यादिना अच्प्रत्ययान्तो निपातितः । महाजं वा महान्तं छागं वा निर्वपन्ति ददति गृहमेधिनः गृहस्थाश्रमिणः समामनन्ति संस्मरन्ति । एवं च स्मृत्यनुरोधेन गृहागताय वशिष्ठाय गृहमेधिना वाल्मीकिना मधुपर्के वत्सतरी विशसिता तेन च शास्त्रं प्रमाणयता सा भक्षितेति भावः ॥

(ख) निगृहीतः पराभूतः ॥

(ग) तदेवाऽह—तेनेति । निर्वर्तितः आचरितः । विसर्जिता न तु विशसिता । एवं च मधुपर्कस्य समांसत्वे जनकाय अभ्यागताय वत्सतरीविसर्जनं वाल्मीकिना कृतमसङ्गतमेव स्यादिति त्वत्पक्षपरा[illegible] जात इति भावः ॥

(घ) भाण्डायनो मधुपर्कस्य समांसत्वाऽमांसत्वयोर्व्यवस्थामाह—अनिवृत्तेति । अनिवृत्तमांसानां मांसात् अनिवृत्ताः अनिवृत्तमांसाः तेषां मांसभक्षकाणां । एवं कल्पं समांसमधुपर्कदानरूपं अनुष्ठानम् ॥

सौधातकिः । किं णिमित्तं । (१)

(क) भाण्डायनः । स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तस्तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

सौधातकिः । तदो किं त्ति आअदो । (२)

(ख) भाण्डायनः । चिरन्तनप्रियसुहृदं प्राचेतसं द्रष्टुम् ।

(ग) सौधातकिः । अवि अज्ज सम्बधिणीहिं समं संवुत्तं से दंसणं ण वत्ति । (३)

भाण्डायनः । सम्प्रत्येव भगवता वसिष्ठेन देव्याः कौशल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत् स्वयमुपेत्य वैदेहो द्रष्टव्य इति ।

(घ) सौधातकिः । जहा एदे त्थविरा परप्परं मिलिदा तहा अह्मे वि बटुएहिं समं मिलिअ अणज्झाअमहूसवं खेलन्ता सम्भावेह्म । (४)

(इति परिक्रामतः)

---

(१) किं निमित्तम् ।

(२) ततः किमित्यागतः ।

(३) अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ।

(४) यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः समं मिलित्वानध्यायमहोत्सवं खेलन्तौ संभावयावः ।

---

(क) दैवदुर्विपाकं दैवदुष्परिणामं सापवादत्यागरूपं । वैखानसः वानप्रस्थः । कतिपये बहवः 'प्रथमचरमतये'—त्यादिना सर्वनामत्वे जसः श्यादेशः । तप्यमानस्य तपः कुर्वाणस्य । संवत्सरा अतीता इति शेषः ॥

(ख) प्राचेतसं वरुणपुत्रं वाल्मीकिम् ॥

(ग) सम्बन्धिनीभिः दशरथपत्नीभिः । संवृत्तं सञ्जातम् ॥

(घ) अनध्यायमहोत्सवं अनध्यायः अध्ययनाभावः स एव महान् उत्सवः आनन्दजनकः कालविशेषः तं । खेलन्तौ 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः खेलनेनेत्यर्थः । सम्भावयावः सत्कुर्वः ॥

(क) भाण्डायनः । तदयं ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतसवसिष्ठावुपास्य सम्प्रत्याश्रमबहिर्वृक्षमूलमधितिष्ठति । य एषः ।

(ख) हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रसृमरदहनो ज्वलन्निव वनस्पतिः ॥ २ ॥

(इति निष्क्रान्तौ)

(ग) । विष्कम्भकः ।

---

(ततः प्रविशति जनकः)

(घ) जनकः । अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

---

(क) ब्रह्मवादी ब्रह्म वेदप्रतिपाद्यं ब्रह्म वेदितुं शीलं यस्य सः अधीतवेदवेदान्तः । वृक्षमूलं अधितिष्ठति । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥

(ख) हृदीति । नित्यानुषक्तेन निरन्तरमवस्थितेन । अन्तःप्रसृमरदहनः अन्तः प्रसृमरः व्याप्तः दहनः अग्निर्यस्य सः अत एव ज्वलन् वनस्पतिर्वृक्ष इव ॥ २ ॥

(ग) विष्कम्भकः । अयं मिश्रो विष्कम्भकः मध्यनीचपात्रप्रयोजितत्वेन भाषाद्वयवत्वात् ॥

(घ) अपत्ये इति । अपत्ये सीतारूपे यत् तादृक् अनिर्वचनीयं दुरितं गर्भिण्या गृहनिर्वासनादि अभवत् । तेन महता तीव्रेण अतिकठिनेन व्रणितहृदयेन व्रणितं व्रणयुक्तं कृतं हृदयं येन तथाभूतेन व्यथयता व्यथाजनकेन तेन दुःखेन विषक्तः अत्यासक्तेन जनितः समुत्पन्नः । पटुः योगिनोऽपि मम हृदयं विदारयितुं समर्थः । व्यासङ्गान्तरेण ब्रह्मचिन्तनादिनाऽपि परिहर्तुमशक्यः । धारावाही सन्तानरूपेण निरन्तरमवस्थितः । चिरेणाऽपि बहुकालातिक्रमणेनाऽपि नव इव नवोद्भूत इव मर्माणि जीवस्थानानि निकृन्तन् क्रकच इव करपत्र इव मे मन्युः शोकः क्रोधो वा न विरमति न अवसानं प्राप्नोति । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥ ३ ॥

(क) कष्टमेवं नाम जरसा दुःखेन च दुरासदेन भूयः पराकसान्तपनप्रभृतिभिस्तपोभिरात्तरसधातुरनुपयुज्यमानो नाद्यापि मे दग्धदेहः पतति । अन्धतामिस्रा ह्यसुर्या नाम ते लोकास्तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि च प्रतिक्षणपरिभावनया स्पष्टनिर्भासः प्रत्यग्र इव दारुणो न मे दुःखसंवेगः प्रशाम्यति । अयि मातर्देवयजनसम्भवे देवि सीते ईदृशस्ते निर्माणभागः परिणतो येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते । हा हा पुत्रि

(ख) अनियतरुदितस्मितं विराजत्-
कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ ४ ॥

---

(क) जरसा वार्द्धकेन । दुरासदेन आसादयितुं प्राप्तुमशक्येन दुःखेन च । पराकादीनि तपसां भेदाः तदुक्तं याज्ञवल्क्येन 'द्वादशाहोपवासेन पराकः परिकीर्तितः । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ एककं प्रत्यहं पीत्वा अहोरात्रमभोजनं । कृच्छ्रः सान्तपनो नाम सर्वपापप्रणाशनः' ॥ प्रभृतिशब्देन चान्द्रायणं कृष्णप्रतिपदमारभ्य एकैकग्रासवृद्ध्या अमावास्यायां पञ्चदश ग्रासाः ततः शुक्लप्रतिपदमारभ्य एकैकग्रासह्रासः इदं यवमध्यचान्द्रायणं । तदेव कृष्णप्रतिपदमारभ्य ह्रासे शुक्लप्रतिपदमारभ्य वृद्धौ पिपीलिकामध्यं चान्द्रायणं । तदादिभिः तपोभिः व्रतैः भूयः बाहुल्येन । आत्ताः गृहीताः रसाः देहस्थाः शोणितादयो द्रवाः धातवो मांसादयश्च यस्य सः । अत एव अनुपयुज्यमानः अन्नादिना पुष्टिमप्राप्नुवन् मे दग्धदेहः । असूयेयमुक्तिः । नाऽद्याऽपि पतति । अन्धतामिस्राः अन्धं अन्धकरणं तामिस्रं तिमिरं येषु ते । असुर्याः असुराणां इमे असुर्याः इति ह्रस्वमध्यः पाठः । ईशावास्ये भाष्यकारा एवमेवाऽहुः । एतेन असूर्या इति पाठः सूर्योदयरहिता इति तद्व्याख्यानञ्च भ्रममूलकमेव । अन्धतामिस्राइत्यनेन गतार्थत्वादुपेक्ष्यं च । ये आत्मघातिनः सन्ति तेभ्यः ते लोकाः प्रतिविधीयन्ते यावत्पापक्षयं आत्मघातिनान्तावत्तत्र वास इति भावः । एतेन तस्यातिक्लेशकारत्वेनातिदुःसहत्वात् ततो वरमतिदुःखितस्यापि मे जीवनमिति सूचितम् । प्रतिक्षणपरिभावनया क्षणे क्षणे चिन्तया । स्पष्टनिर्भासः स्पष्टं निर्भासः स्फुरणं यस्य । प्रत्यग्र इव नव इव दारुणः दुःखसंवेगः न प्रशाम्यति । न शक्यते इति । सापवादत्वादिति भावः ॥

(ख) अनियतेति । अहं शिशोः ते वदनकमलकं । अल्पार्थे कन् । स्मरामि । कीदृशं अनियते नियमरहिते निर्हेतुकत्वात् रुदितस्मिते यस्मिन् तत् । विराजन्ति कतिपयानि कोमला दन्ता एव कुड्मलानि कोरकाः तेषां अग्राणि यस्मिन् तत् । स्खलत्

(क) भगवति वसुन्धरे सत्यमतिदृढासि

(ख) त्वं वन्हिर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती तद्वत्सु या दैवतम्
तस्यास्त्वं दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥५॥

(नेपथ्ये) इत इतो भगवतीमहादेव्यौ ।

(ग) जनकः । (दृष्ट्वा) अये गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती । (उत्थाय) कां पुनर्महादेवीत्याह । (निरूप्य) हा कथं महाराजदशरथस्य धर्मपत्नी प्रियसखी मे कौशल्या । क एतत् प्रत्येति सैवेयमिति ।

(घ) आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विपाकः ॥ ६ ॥

---

गद्गदीभवत् असमञ्जसं बाल्यभावेन व्याकरणादिसंस्काररहितं तथाऽपि मुग्धं मनोहरं जल्पितं यस्मिन् तत् ॥ ४ ॥

(क) अतिदृढा अतिकठोरा ॥

(ख) **त्वमिति** । त्वं सम्बोध्या पृथिवी वशिष्ठगृहिणी अरुन्धती । यस्याः सीतायाः माहात्म्यं विदुः । वेत्तेर्लटः प्रथमपुरुषबहुवचनं । यदि वा अथ वा रघोः कुलगुरुः । नित्यसापेक्षत्वात्सविशेषणत्वेऽपि वृत्तिः । देवो भास्करः सूर्यः स्वयं यस्या माहात्म्यं वेत्ति । वाक् उपनिषद्रूपा विद्यां तज्ज्ञानमिव । तद्वत् वन्ध्यादिवत् या दैवतं देवतारूपेण माननीया । तस्याः दुहितुः कन्यायाः तथा सापवादं विजने आसन्नप्रसवायाः परित्यागेन अनाथायाः क्रव्याद्भयो नाशरूपं किं केन प्रकारेण अमृष्यथाः सोढवती । सर्वंसहाया अपि तव तत्सहनमत्याश्चर्यकरमिति भावः ॥ ५ ॥

(ग) गृष्टिना तन्नाम्ना कञ्चुकिना । प्रत्येति विश्वसिति ॥

(घ) **आसीदिति** । उपमानपदेन औपम्यबोधकेन यथापदेन किं । न किञ्चित्प्रयोजनं । तस्या एव श्रीत्वादिति भावः । सा एषा दैववशेन दैवविपर्यासेन दुःखात्मकं दुःखमयं किमपि अन्यदिव अन्यादृशमिव प्रत्यभिज्ञातुमप्यशक्यं भूतं पीतन्यधर्मवत् । पातन्यवाची भूतशब्दो नित्यनपुंसक इति अव्ययमनोरमायां । भूतमियं ब्राह्मणीतिवत् । अहो आश्चर्यं । विपाकः परिणामः ॥ ६ ॥

(क) अयमपरः पापो दशाविपर्यासः ।

(ख) य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

( ततः प्रविशत्यरुन्धती कौशल्या कञ्चुकी च )

(ग) **अरुन्धती** । ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्य वैदेह इत्येष व: कुलगुरोरादेशः । अतएवाहं प्रेषिता । ततः कोऽयं पदे पदे महाननध्यवसायः ।

(घ) **कञ्चुकी** । देवि संस्तम्भयात्मानम् । अनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि ।

(ङ) **कौशल्या** । एदिसे काले मिथिलाधिवो दट्ठव्वो त्ति समं ज्जेव सव्वाइं दुक्खाइं समुब्भवन्ति । ण सक्कणोमि उग्घट्टमाण मूलबन्धणं हिअअं अवत्थावइदुं । (१)

**अरुन्धती** । अत्र कः सन्देहः ।

(च) **सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि**

---

(१) ईदृशे काले मिथिलाधिपो द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति । न शक्नोम्युद्घट्टमानमूलबन्धनं हृदयमवस्थापयितुम् ।

---

[illegible] पाप: [illegible] : [illegible] टेतक: ॥
[illegible] । [illegible] । [illegible] क्षारमिव लवणमिव । तस्यै[illegible]
[illegible] जात [illegible] ७ ॥
(ग) [illegible] ।ायः । जनकदर्शने अप्रवृत्तिरिति यावत् ॥

दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

(क) कौशल्या । कधं वच्छाए वहूए एव्व गदे तस्स राएसिणो मुहं दंसअह्म । (१)

(ख) अरुन्धती । एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

(ग) कौशल्या । एसो सो महाराअस्स हिअआणन्दो वच्छाए वहूए पिदा राएसी ; हद्धी हद्धी सम्भाविदह्मि अनुवट्ठिदमहूसवे दिअहे । हा देव्व सव्वं ज्जेव तं णत्थि । (२)

जनकः । (उपसृत्य) भगवत्यरुन्धति वैदेहः सीरध्वजोऽभिवादयते ।

(घ) यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।

---

(१) कथं वत्साया वध्वा एवं गते तस्य राजर्षेर्मुखं दर्शयामः ।

(२) एष स महाराजस्य हृदयानन्दो वत्साया वध्वाः पिता राजर्षिः । हा धिक् हा धिक् सम्भाविताऽस्म्यनुपस्थितमहोत्सवे दिवसे । हा दैव सर्वमेव तन्नास्ति ।

---

वियोगात् जातानि दुःखानि प्रेयसि अतिप्रियजने दृष्टे दुःसहानि सन्ति । स्रोतसां प्रवाहाणां सहस्रैः इव संप्लवन्ते उद्गच्छन्ति । सतत एवाऽऽविर्भवन्तीत्यर्थः ॥ ८ ॥

(क) एवं गते एवं प्रवृत्ते सति ईदृशदारुणावस्थायां प्राप्तायाम् ॥

(ख) एष इति । श्लाघ्यश्चासौ सम्बन्धीच कन्यापिताइत्यर्थः । जनकानां तद्वंशीयानां राज्ञां कुलस्य वंशस्य उद्वहः श्रेष्ठः । दृश्यते इति शेषः । ब्रह्मपरायणं ब्रह्मणो वेदस्य परायणं आदित आरभ्य यावदन्तं सोपनिषत्कं अध्ययनं गुरुशिष्याभ्यां निर्वर्त्यमानं कर्म जगौ अध्यापयामास ॥ ९ ॥

(ग) सम्भाविताऽस्मि समागतास्मि । अनुपस्थितमहोत्सवे सीतापरित्यागेन अनुपस्थितः विलयं गतः महोत्सवो यस्मिन्तादृशे काले ॥

(घ) ययेति । पवित्रस्य महसः तेजसः निधिरपि यया त्वया । पूतंमन्यः पूतं आत्मानं मन्यते पूतंमन्यः । 'आत्ममाने खश्च' इति खश् । 'अरुर्द्विषदि'—ति मुम् ।

त्रिलोकीमङ्गल्यामवनितललोलेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

(क) अरुन्धती । परं ज्योतिस्ते प्रकाशताम् । अयं त्वां पुनातु देवः परोरजा य एष तपति ।

(ख) जनकः । आर्ये गृष्टे अपि कुशलमस्याः प्रजापालस्य मातुः ।

(ग) कञ्चुकी । निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः । राजर्षे अनेनैव मन्युनाऽचिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि त्वं दुःखयितुमतिदुःखिताम् देवीम् । रामभद्रस्यापि दैवदुर्नियोगः कोऽपि । यत् किल समन्तात्प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निपरिशुद्धिमल्पकाः प्रतियन्तीत्यतो दारुणमनुष्ठितम् ।

(घ) जनकः । आः कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने । कष्टमेवंवादिना जनेन रामपरिभूता अपि वयं पुनः परिभूयामहे ।

अरुन्धती । एवमेतत् । अग्निरिति वत्सां प्रति परिलघून्यक्षराणि । सीतेत्येव पर्याप्तम् । हा वत्से

---

ते पतिः वशिष्ठः । पूर्वेषामपि गुरूणां गुरुतमः प्रधानभूतो गुरुः सप्तर्षिमध्ये प्रधानभूतः । त्रिलोकीमङ्गल्यां त्रयाणां लोकानां समाहारस्त्रिलोकी तस्या मङ्गलाय हितां त्रिभुवनमङ्गलकारिणीं जगद्वन्द्यां जगत्पूज्यां तां देवीं द्योतमानां पातिव्रत्येनान्या विजिगीषमाणां वा । उषसमिव उषःकालदेवतामिव भगवतीं । अवनितले लोलेन चञ्चलेन शिरसा भूतले नमितेन शिरसा वन्दे प्रणमामि । उषः पक्षे तेजोनिधिः सूर्यः अन्यत्समानं । श्लेषोत्थापिता उपमा ॥ १० ॥

(क) परं ज्योतिः ब्रह्म । परोरजाः रजसः परः परोरजाः राजदन्तादित्वाद्रजसः परनिपातः पारस्करादित्वात्सुट् । रजोगुणेनासंयुक्तः ॥

(ख) प्रजापालस्य प्रजारंजनमात्रपरस्य तद्वशेन कृतसीतात्यागस्य नृशंसतरहृदयस्य ॥

(ग) उपालब्धाः आधिक्षिप्ताः । कञ्चुकी कौसल्यारामभद्रयोर्निरपराधत्वं सूचयन्नाह राजर्षे इत्यादिना । अनेनैव मन्युना सीतात्यागजनितकोपेन । अचिरं त्यागश्रवणोत्तरक्षणे एव परित्यक्तं रामभद्रमुखचन्द्रदर्शनं यया तां । प्रवृत्ता बीभत्सा कुत्सिता किंवदन्ती वार्ता येषान्ते तथा । 'नद्यृतश्च' इति कप् । पौराः नागराः जानपदाः देशभवाश्च अल्पकाः कुत्सिताः पृथग्जनाः । अग्निशुद्धिं अग्निकृतां शुद्धिं न प्रतियन्ति विश्वसंति ॥

(घ) आः । कोपद्योतकमव्ययम् । 'आः स्यात्कोपप्रपीडयोः' इत्यमरः । अग्निर्नाम । अग्निरस्मत्प्रसूतिशोधने न शक्त इति भावः । रामपरिभूताः अत्यन्तं विमानिताः ।

(क) शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं जनयति
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतो
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ११ ॥

(ख) कौशल्या । अम्मो उम्मीलन्ति वेअणाओ । (१) (इति मूर्च्छति) ।
जनकः । हा कष्टं किमेतत् ।
अरुन्धती । राजर्षे किमन्यत् ।

(ग) स राजा तत् सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।

---

(१) अम्मो उन्मीलन्ति वेदनाः ।

---

निरपराधायाः सापवादत्यागेनेति शेषः । पुनः परिभूयामहे । अग्निशुद्धिमिति ब्रुवता जनेन परिलघूनि अतिक्षुद्राणि । अग्न्यपेक्षयाऽतिशुद्धायाः सीतायाः लघुनाऽग्निना शुद्धिः कृतेति अतिलाघवकरं वाक्यमिति भावः । पर्याप्तं शुद्ध्यतिशयद्योतने सीतेति नामैव समर्थमिति भावः ॥

(क) शिशुरिति । यत्त्वं मम शिशुर्वा शिष्या वा शासनीया वा असि । तन्मन्निरूपितं त्वयि विद्यमानं शिशुत्वं शिष्यत्वं वा तथा तिष्ठतु । तेन नाऽत्र कृत्यमिति भावः । त्वयि विशुद्धेरुत्कर्षः शोधकैरग्न्यादिभिर्विनैव स्वतः शुद्धिरूपः स तु तवाऽग्न्यादितुल्यत्वान्मम भक्तिं परमां प्रीतिं सेव्यताबुद्धिं जनयति उत्पादयति । यद्यपि वयसा बाला मम श्वश्रूत्वेन शासनीया च तथापि स्वतः शुद्धत्वादग्न्यादिवन्ममाऽपि सेव्यैवेति भावः । किं च लिङ्गेन स्त्रैणं स्त्रीत्वं वयसा शिशुत्वं भवतु । तेन न काचिद्धानिः । ननु जगतां वन्द्याऽसि । न ममैव ।।उक्तमर्थमर्थान्तरोपन्यासेन द्रढयितुमाह—गुणिषु गुणवत्सु ये गुणास्ते पूजास्थानं भवन्ति तानुद्दिश्यैव ते पूज्या भवन्ति । लिङ्गञ्च वयश्च न पूजास्थानं । चद्वयेन नद्वयेन च प्रत्येकं लिङ्गस्य वयसश्च तयोः समुदितयोश्च पूजास्थानत्वं प्रतिषिध्यते ॥ ११ ॥

(ख) उन्मीलन्ति प्रादुर्भवन्ति ॥

(ग) स राजेति । स राजा यः पूर्वं बहुशोऽनुभूतः । तत्सौख्यं भर्तृपुत्रादिसान्निध्यजनितं । स च शिशुजनः रामादिः लोकोत्तरप्रेमाऽऽधारः । ते च दिवसाः राजादिसान्निध्येन स्वातन्त्र्याऽऽपादकाः । त्वयि सुहृदि तत्कालसाक्षिणि सम्बन्धिनि दृष्टे तत्सर्वं स्मृतावाविर्भूतं । अस्मिन्घोरे विपाके तस्य राज्ञो मृतत्वाद्रामस्य प्रभुत्वेन सीतात्यागकर्तृत्वात्प्रेमास्पदत्वाभावात् घोरे परिणामे सति । तव सखी कौसल्या विमूढा

विपाके घोरेऽस्मिन् ननु खलु विमूढा तव सखी
पुरन्ध्रीणां चेतः कुसुमसुकुमारं हि भवति ॥ १२ ॥

(क) जनकः । हन्त हन्त सर्वथा नृशंसोऽस्मि संवृत्तः । यश्चिरस्य दृष्टान् प्रियसुहृदः प्रियान् दारान् न स्निग्धं पश्यामि ।

(ख) स संबंधी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।
शरीरं जीवो वा यदधिकमतो वा प्रियतमो
महाराजः श्रीमान् किमिव मम नासीद्दशरथः ॥ १३ ॥

कष्टमियमेव सा कौशल्या ।

(ग) यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।

---

गतचेतना ननु निश्चयेन । तत्र हेतुमाह—पुरन्ध्रीणां कुलस्त्रीणां चेतः कुसुमवत् सुकुमारं भवति । अत एव तत्स्मृतिमात्रेण गतचेतनाऽभूदिति भावः ॥ १२ ॥

(क) प्रियसुहृदः दशरथस्य प्रियान् दारान् स्त्रियं कौसल्यां । स्निग्धं स्नेहयुक्तं । क्रियाविशेषणं । भूतपूर्वाणि मित्राण्यपि दुहितृपरित्यागजदुःखेन अमित्रा इव भासन्त इति भावः ॥

(ख) दशरथविषयं प्रेमातिशयं स्मरति—स सम्बंधीति । स सम्बंधी श्लाघ्यः स्तुत्यः प्रियः स सुहृच्च असौ । स्मृतावाविर्भावादसाविति निर्देशः । तत् स दशरथ एव मम हृदयमभूत् । उद्देश्यविधेययोरैक्यमापादयत्सर्वनामक्रमेण तत्तल्लिङ्गभाग्भवति इति तच्छब्दस्य नपुंसकत्वं 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इत्यादौ सेत्यस्य स्त्रीत्ववत् । स चाऽनन्दः स एव दशरथः साक्षादानन्दः । आनन्दजनकत्वेनाऽऽनन्दत्वारोपः । अपि च स एव निखिलं सर्वं जीवितस्य फलं । नाऽन्यत्फलं । स शरीरं वा जीवो वा यत् अतोऽप्याधिकं तत्सर्वं दशरथ एवासीत् । इतो वा प्रियतमः महाराजः श्रीमान् दशरथः मम किमिव नाऽसीत् अपि तु सर्वं स एवासीत् इति भावः । इवशब्दोऽत्र वाक्यालङ्कारे ॥ १३ ॥

(ग) **यदस्या इति** । अस्याः कौसल्यायाः वा अथवा पत्युः दशरथस्य रहसि एकान्ते दूषितं दूषणं यत्परमं अतिशयितं अभूत् । प्रणयापराधोऽभवदित्यर्थः । तत्राहं अनयोर्दम्पत्योः जायापत्योः पृथक् पार्थक्येन उपालम्भस्य भर्त्सनस्य विषयोऽभूवं । दशरथकृतापराधे तवायं प्रियसुहृत् एवं अपराद्ध इति कौसल्या मां अब्रवीत् ।

प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत् स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

(क) अरुन्धती । हा कष्टमतिचिरनिरुद्धनिःश्वासनिष्ठुरं हृदयमस्याः ।
जनकः । हा प्रियसखि । (इति कमण्डलुजलेन सिञ्चति) ।
कञ्चुकी ।

(ख) सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम् ॥१५॥

(ग) (१) कौशल्या । (संज्ञां लब्ध्वा) । हा वच्छे जाणइ कहिं सि । सुमरामि दे विआहलच्छीपरिग्गहेक्कमण्डणं पप्फुरन्तसुद्धविहसिदं मुद्धमुहपुण्डरीअं । आप्फुरन्तचन्दचान्दिआसुन्दरेहिं अङ्गेहिं पुणो वि मे

---

(१) हा वत्से जानकि कुत्रासि । स्मरामि ते विवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धविहसितं मुग्धमुखपुंडरीकम् । आस्फुरच्चन्द्रच-

---

कौसल्याया अपराधे तवैषा प्रियसखी मामेव अपराध्नोति इति दशरथो भर्त्सयांचक्रे । तदनु पश्चात् प्रसादे कोपे वा । तयोरिति शेषः । विधिः व्यापारः मदधीनः अभूत् । तौ कोपयितुं प्रसादयितुं वा अहमेव समर्थोऽभूवमित्यर्थः । यत्स्मरणं हृदयं अवस्कन्द्य परितः संशोष्य दहति । अतः तत्स्मृत्वा अलं । तत्स्मरणं नैवकर्तव्यमित्यर्थः । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्ययः । यस्य सर्वस्य स्मरणे हृदयदाह एव फलं अतः अलं तत्स्मरणेनेति भावः ॥ १४ ॥

(क) अतिचिरं निरुद्धेन निःश्वासेन निष्ठुरं निश्चलम् ॥

(ख) सुहृदिति । विधिर्दैवं प्रथमं सुखप्रदः सुहृदिव मित्रमिव । एकरसां एकः एकाकी रसान्तरेणासंमिश्रः रसः प्रेमा यस्यां एतादृशीं अनुकूलतां आनुकूल्यं प्रकटय्य प्रदर्शयित्वा । पुनः अकाण्डे अनवसरे यद्विवर्तनं रूपान्तरपरिग्रहः तेन दारुणः सन् । मनोरुजं मनसः रुजं व्यथां विशिनष्टि विशेषेण जनयति अहो आश्चर्यं । पूर्वं दैवमनुकूलं भूत्वा सुखानि प्रदर्श्य अनवसरे दुःखानि प्रदर्शयतीति आश्चर्यं । दैवगतिर्दुर्वितर्क्येति भावः ॥ १५ ॥

(ग) विवाहस्य लक्ष्म्याः शोभायाः परिग्रह एव एकं मुख्यं मण्डनं भूषणं यस्मिन् । प्रस्फुरत् शुद्धं निर्मलं हसितं हासो यस्मिन् तथाभूतं मुग्धं सुन्दरं मुखमेव पुण्डरीकं सिताम्भोजं तत् । आः सर्वतः स्फुरतः विकसतः चन्द्रस्य चन्द्रिका

जादे उज्जोएहिउच्छङ्गं । सव्वदा महाराओ भणादि एसा रहुउलमहत्तराणं वहू अह्माणं उण जणअसम्बन्धेण दुहिदिआ ज्जेव । (१)

कञ्चुकी । यथाह देवी ।

(क) पञ्चप्रसूतेरपि राज्ञ आसीत् प्रियो विशेषेण सुबाहुशत्रुः ।
155 वधूचतुष्केऽपि यथैव शान्ता प्रिया तनूजास्य तथैव सीता ॥१६॥

(ख) जनकः । हा प्रियसख महाराज दशरथ, एवमसि सर्वप्रकारहृदयङ्गमः । कथं विस्मर्यसे ।

(ग) कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि ।

---

न्द्रिकासुन्दरैरङ्गैः पुनरपि मे जाते उद्योतयोत्सङ्गं । सर्वदा महाराजो भणत्येषा रघुकुलमहत्तराणां वधूरस्माकं पुनर्जनकसम्बन्धेन दुहितैव । (१)

---

कौमुदी तद्वत्सुन्दरैः शोभनैरङ्गैः । उद्योतय शोभितं कुरु । अतीतवृत्तान्तान् रसावेशेन वर्तमानानिव कृत्वा भणतीति निर्देशः । एवं प्रणयातिरेकस्त्वय्यासीच्छ्वशुरस्येति भावः ॥

(क) पञ्चेति । पञ्च शान्तासहिताश्चत्वारो रामादयः प्रसूतयोऽपत्यानि यस्य तस्य राज्ञो दशरथस्य सुबाहुशत्रुः सुबाहोः विश्वामित्रयज्ञविघ्नकारिणो राक्षसस्य शत्रुः शातयिता नाशकः रामभद्रः विशेषेण प्रिय आसीत् । वधुचतुष्केऽपि वधूनां स्नुषाणां चतुष्के सीताऊर्मिलाश्रुतकीर्तिमाण्डवीरूपे । कन्यावध्वोः समरसो राजेति भावः ॥ १६ ॥

(ख) सर्वैःप्रकारैः हृदयंगमः मनोहारी ॥

(ग) तदेव दर्शयति—**कन्याया इति** । कन्यायाः पितरः पितृपक्षीयाः । जामातुः आप्तं जनं पूजयन्ति सत्कुर्वन्ति किल प्रसिद्धं ह्येतत् । सम्बन्धे रामादिकर्तृकसीतादिविवाहरूपे । ते तव दशरथस्य । कर्तरि षष्ठी । मयि कन्यापितृत्वात्पूजकेऽपि मयि आराधनं विपरीतं लोकप्रसिद्धिविरुद्धमेव अभूत् । विवाहवेलायां मया त्वं पूजयितव्यः स त्वं मामेव पूजितवान् अहो ते सौजन्यं लोकोत्तरमिति भावः । तथाविधोऽपि सर्वलोकविपरीतलोकोत्तरसौजन्यनिधिरपि कालेनापहृतः नाशितः । सम्बन्धस्य विवाहसम्बन्धस्य । यद्बीजं सीतारूपं तु अपि अपहृतं । अस्मिन्घोरे दारुणे जीवलोकनरके जीवलोक एव नरकः यातनास्थानं तस्मिन् । मम पापस्य पापात्मनः । दुःखेन विरागातिशयादेवमुक्तिः । जीवितं धिक् ।

त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजं तु तद्-
घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ १७ ॥

(क) कौशल्या । जादे जाणइ किं करेमि दढवज्जलेवघडिअवन्ध-णिच्चलं हदजीविदं मं मन्दभाइणीं ण परिच्चअइ । (१)

(ख) अरुन्धती । आश्वसिहि राजपुत्रि बाष्पविश्रामोऽप्यन्तराले कर्तव्य एव । अन्यच्च किं न स्मरसि यदवोचदृष्यशृंगाश्रमे युष्माकं कुलगुरुस्त-दुपजातमेव । किन्तु कल्याणोदर्कं भविष्यति ।

(ग) कौशल्या । भअवदि अदिक्कन्तो मणोरहो । (२)

(घ) अरुन्धती । तत् किं मन्यसे राजपुत्रि मृषोद्यं तदिति । न हीदं मुक्षत्रियेऽन्यथा मन्तव्यं भवितव्यमेव तेन ।

---

(१) जाते जानकि किं करोमि दृढवज्रलेपघटितबन्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति ।

(२) भगवति अतिक्रान्तो मनोरथः ।

---

यथा यमलोके नारकिनो जनाः दुःखभोगायैव जीवितं धारयन्ति न च तत्र म्रियन्ते एवमहमपि अस्मिन्मृत्युलोके वर्तमानोऽपि एतादृशानि दुःखानि भोक्तु-मेव जीवामि न च म्रिये हा धिक् कष्टमिति भावः । एतेन जीवितान्मरणं वर-मिति ध्वन्यते ॥ १७ ॥

(क) दृढेन दुर्भेद्येन वज्रलेपेन घटितः सम्पादितः बन्धो बन्धनं यस्य तथाविधं अत एव निश्चलमेव । हतं पापं जीवितम् ॥

(ख) बाष्पविश्रामः बाष्पाणां विश्रामः । अन्तराले मध्ये । कुलगुरुः वशिष्ठः । तथा उपजातमेव सर्वं सम्पन्नमेव । सीतापरित्यागादिकमिति भावः । कल्याणोदर्कं कल्याणः उदर्कः उत्तरफलं यस्य तत् । अस्य शुभफलं भावीति भावः ॥

(ग) मनोरथः पुनः सीताप्राप्तिरूपः अतिक्रान्तः अतीतः । पुनः सीताप्राप्ति-सम्भावनापि नास्तीति भावः ॥

(घ) राजपुत्रि । मृषोद्यं मृषा उद्यते उच्यते तत् । 'राजसूयसूर्यमृषोद्य'—त्या-दिना वदेर्मृषोपपदात् क्यप् निपातितः । सुक्षत्रिये । त्वयैवं गुरुवचने अश्रद्धा न विधेयेति भावः ॥

(क) आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ १८ ॥

(नेपथ्ये कलकलः)

(सर्वे आकर्णयन्ति)

(ख) **जनकः** । अद्य खलु शिष्टानध्याय इति उद्धतं खेलतां बटूनां कलकलः ।

(ग) **कौशल्या** । सुलहसोक्खं दाव बालत्तणं होदि । (निरूप्य) अम्महे एदाणं मज्झे को एसो रामभद्दलच्छीपरिसोहिदेहिं सावट्ठम्भमुद्धललिदेहिं अंगेहिं अह्माणं लोअणाइं सीदलावेदि । (१)

---

(१) सुलभसौख्यं तावत् बालत्वं भवति । अम्महे एतेषां मध्ये क एष रामभद्रलक्ष्मीपरिशोभितैः सावष्टम्भमुग्धललितैरंगैरस्माकं लोचनानि शीतलयति ।

---

(क) **आविर्भूतेति** । आविर्भूतं प्रकटं ज्योतिर्ब्रह्म तत्त्वं येषां तेषां ब्राह्मणानां ये व्याहारा भाषणानि तेषु संशयो मा भूत् । अयं व्याहारः सत्यो भवेन्न वेति संशया न कर्तव्य इति भावः । तेषां वाचि भाषिते भद्रा कल्याणरूपा लक्ष्मीः सिद्धिर्निषक्ता नितरां सक्ता । एते ऋषयः विप्लुतां मृषार्थां वाचं न व्याहरन्ति । तेषां वाक् अवश्यं भाविनीति भावः ॥ १८ ॥

(ख) शिष्टानध्यायः शिष्टागमननिमित्तः अनध्यायः शिष्टानध्यायः । गुरूणां शिष्टानुवर्तने उद्यतत्वादध्यापनाभावेनानध्याय इति भावः । उद्धतं उच्छृंखलं प्रतिबन्धरहितं । क्रियाविशेषणमेतत् ॥

(ग) सुलभसौख्यं सुलभं सौख्यं यस्मिन् ॥

रामभद्रलक्ष्मीपरिशोभितैः रामभद्रस्य लक्ष्म्या शरीरकान्त्या परिशोभितैः अलंकृतैः । रामभद्रशरीरसौन्दर्यं अस्मिन् संक्रान्तमिव भातीति भावः । सावष्टम्भमुग्धललितैः सावष्टम्भानि सिंहसंहननानि मुग्धानि सुन्दराणि ललितानि मनोहराणि तैः शीतलयति शीतलानि करोति । शीतलशब्दात्करोत्यर्थे णिच् ॥

(क) अरुन्धती । (अपवार्य सहर्षबाष्पम्) इदं नाम तद् भागीरथीनिवेदितरहस्यं कर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति ।

(ख) जनकः । कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
बटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन् ।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनंदनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ १९ ॥

कञ्चुकी । क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ।

जनकः । एवमेतत् । तथा हि ।

(ग) चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।

---

(क) सहर्षबाष्पं हर्षजनितबाष्पसहितं रामपुत्रदर्शनजन्योऽयं हर्षः । भागीरथ्या निवेदितं रहस्यं गुह्यं यस्य तत् तथा कर्णामृतं कर्णयोरमृतमिव सुखजनकं । एवं ज्ञातेऽपि आयुष्मतोः कुशलवयोः मध्ये कतरः कुशो लवो वेति तु न विद्मः न जानीमः । एवमत्यानन्दजनकरामपुत्रदर्शनलाभेन स्वस्मिन् माहात्म्यं द्योतयन्ती विद्म इति बहुवचनं प्रयुनक्ति ॥

(ख) कुवलयेति कुवलयस्य नीलोत्पलस्य दलानि पर्णानि इव स्निग्धः कोमलः श्यामश्च । शिखण्डकौ काकपक्षौ भूषणं यस्य सः । पुण्यश्रीकः पुण्या श्रीर्यस्य । 'शेषाद्विभाषा' इति कप् । श्रिया देहशोभया बटुपरिषदं बटूनां समाजं सभाजयन् अलङ्कुर्वन् इव पुनः शिशुरिव बाल इव भूतो जातः मे वत्सः स रघुनन्दनः रामः दृष्टः दृशोः अमृतमिव शीतलं अञ्जनं तत्कार्यं कुरुते । रामरूपसंवादेन इयं तस्मिन् बालके उत्प्रेक्षा । अयन्तु क इति न ज्ञायते ॥ १९ ॥

(ग) तथा हि क्षत्रियब्रह्मचारितामेव विवरीतुं आह—चूडेति । अयं बालः पृष्ठतः पृष्ठदेशे । आद्यादित्वात् तसिः । चूडाभिः शिखाभिः चुम्बितानि संस्पृष्टानि कङ्कस्य पक्षिविशेषस्य पत्राणि बाणपुङ्खवर्तिनः पक्षाः यस्य तत् तूणीद्वयं अभितः उभयोः पार्श्वयोः धत्ते । 'पर्यभिभ्याञ्च' । 'सर्वोभयार्थाभ्यामेव' इति तसिल् । स्तोकं अल्पं भस्म 'पोटायुवती'—त्यनेन समासात् स्तोकशब्दस्य परनिपातः । तदेव पवित्रं लाञ्छनं यस्य तादृशं उरः वक्षः धत्ते । रुरोः भारशृङ्गाऽऽख्यस्य मृगस्य इयं तां त्वचं धत्ते । मौर्व्या मूर्वा लताविशेषःतस्याः विकारो मौर्वी तया तत्तन्तुनिर्मितया मेखलया कटिसूत्रेण । नियन्त्रितं नितरां बद्धं माञ्जिष्ठकं मञ्जिष्ठया तन्नाम्ना

मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं ॥
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥

(क) भगवत्यरुन्धति किमुत्प्रेक्षसे कुतस्त्योऽयमिति ।

(ख) अरुन्धती । अद्यैवाऽऽगता वयम् ।

(ग) जनकः । आर्य गृष्टे अतीव मे कौतुकं वर्तते तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ । इमं च बालकं ब्रूहि केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ॥

कञ्चुकी । यथाऽऽज्ञापयसि । ( इति निष्क्रान्तः )

कौशल्या । किं भणध ज्जेवं भणिदो आगमिस्सदि त्ति । (१)

(घ) अरुन्धती । भिद्येत वा सद्वृत्तमीदृशस्य निर्माणस्य ।

(ङ) कौशल्या । ( निरूप्य ) कधं सविणअं णिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इदोऽहिमुहं पसरिदो ज्जेव सो वच्छो । (२)

---

(१) किं भणथैवं भणित आगमिष्यतीति ।

(२) कथं सविनयं निशामितगृष्टिवचनो विसर्जितर्षिदारक इतोऽभिमुखं प्रसृत एव स वत्सः ।

---

र र मा 'तेन रक्तं रागात्' इत्यण् । तदेव माञ्जिष्ठकं । स्वार्थे कन् ।
: धत्ते । पाणौ हस्ते कार्मुकं धनुः । अक्षसूत्रवलयं रुद्राक्ष-
। पिप्पलः अश्वत्थः तस्य विकारः पैप्पलः तं । 'तस्य विकारः'
इ । द धत्ते । क्रियादीपकालङ्कारः । क्षत्रियबटोरिमानि असाधारणानि
ानि ि नीति तैस्तस्मिन्बाले क्षत्रियबटुत्वं अनुमिमीते इति अनु-
माना ते व २० ॥
। काभ्यां मातापितृभ्यामुत्पन्न इत्यर्थः ॥
य ाह—अद्यैवेति । न इमं जानीम इति भावः ॥

**जनकः ।** ( चिरं निर्वर्ण्य ) भोः किमप्येतत्

(क) महिम्नामेतस्मिन् विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।
मनो मे सम्मोहः स्थिरमपि हरत्येव बलवा -
नयोधातुं यद्वत् परिलघुरयस्कान्तशकलः ॥ २१ ॥

( प्रविश्य )

(ख) **लवः ।** अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये । ( विचिन्त्य ) अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । ( सविनयमुपसृत्य ) एष वो लवस्य प्रणामपर्यायः ।

**अरुन्धतीजनकौ ।** कल्याणिन्नायुष्मान् भूयाः ।

**कौशल्या ।** जाद चिरं जीव । (१)

---

(१) जात चिरं जीव ।

---

(क) **महिम्नामिति** । एतस्मिन् दृग्गोचरे बाले विनयेन नम्रत्वेन शिशुतया बाल्येन मौग्ध्येन सौन्दर्येण च मसृणः कोमलः महिम्नां तेजसां अतिशयो यो वर्तते सः विदग्धैः सूक्ष्मबुद्धिभिः अतिकोविदैः निर्ग्राह्यः नितरां ग्राह्यः बोद्धुं शक्यः । अविदग्धैः सूक्ष्मार्थग्रहणाशक्तैः न निर्ग्राह्यः सम्मोहः सम्मोहयतीति सम्मोहः सम्मोहकः सम्पूर्वान्मुहेः कर्तरि पचाद्यच् । अयं बलवान् बलिष्ठः स्थिरमपि वेदान्तश्रवणादिना विषयपराङ्मुखमपि मे मनः हरत्येव । यथा परिलघुः अयस्कान्तशकलः लोहाऽऽकर्षपाषाणस्य शकलः खण्डः अयः लोहरूपं धातुं यथा तथा । अत्र केचित्सम्मोद इतिपाठं कल्पयित्वा एतद्दर्शनजन्य आनन्दातिशय इति व्याचक्षते । केचित्सम्मोह इति पाठेपि एतद्दर्शनजन्यः व्यामोह इति व्याचक्षते । केचित्सम्मोहस्थिरमपीति पाठं पठित्वा एतस्मिन् अतिशयः सम्मोहे स्थिरमपि मे मनः हरत्येवेति व्याचक्षते । तद्व्याख्यानं उपमानवाक्ये परिलघुरिति पदस्य अनर्थकताऽऽपत्त्या निर्दुष्टस्य भवभूतिश्लोकस्य अधिकपददोषपत्वेन दूषितत्वं परिकल्पयन्तः स्वस्य विपरिलघुतां आविश्चक्रुः । एतद्व्याख्याने तु बालके लघुतया विशेषणस्य उभयत्र साम्येन तद्दोषपरिहारः ॥२१॥

(ख) अज्ञातेति अज्ञाताः नाम अभिधेयं क्रमः पूज्यतानिमित्तं पौर्वापर्यं अभिजनः कुलं च एषां तान् स्वतः स्वबुद्धिं आश्रित्य प्रणामपर्यायः प्रणामस्य नमनस्य पर्यायः परिपाटीक्रमेण नमनम् ॥

**अरुन्धती।** एहि वत्स (लवमुत्सङ्गे कृत्वा स्वगतम्) दिष्टया न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे संपूर्णः।

(क) **कौशल्या।** जाद इदो वि दाव एहि। (क्रोडे कृत्वा) अम्महे ण केअलं दरविअसन्तणीलुप्पलदामसामलुज्जलेन देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहरदीहरेण सरेण अ रामभद्दमणुहरदि। णं कठोरकमलगब्भपक्खलो सरीअप्फंसो वि तादिसो ज्जेव वच्छस्स। जीव जाद पेक्खामि दाव दे मुहचन्दं। (चिबुकमुन्नमय्य निरूप्य च सबाष्पाऽऽकूतम्) राएसि किं ण पेक्खसि णिउणं णिरुविज्जन्तं से मुहं वच्छाए वहूए मुहचन्देण संवददि ज्जेव। (१)

**जनकः।** पश्यामि सखि पश्यामि।

---

(१) जात इतोपि तावदेहि। अम्महे न केवलं दरविकसन्नीलोत्पलदामश्यामलोज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घदीर्घेण स्वरेण च रामभद्रमनुहरते। ननु कठोरकमलगर्भपक्ष्मलः शरीरस्पर्शोपि तादृश एव वत्सस्य। जीव जात प्रेक्षे तावत्ते मुखचन्द्रम्। राजर्षे किं न प्रेक्षसे निपुणं निरूप्यमाणमस्य मुखं वत्साया वध्वा मुखचन्द्रेण संवदत्येव।

---

(क) उत्संगः अङ्कः एव केवलशब्दोऽवधारणे। स एव न सम्पूर्णः अपितु मनोरथोऽपि सम्पूर्णः॥

(क) दरं ईषत् विकसन्ति नीलोत्पलानि तेषां दाम माला तद्वत् श्यामलेन श्यामवर्णेन उज्वलेन च देहबन्धेन आकारेण कवलितं भक्षितं यत् अरविन्दकेसरं पद्मकिञ्जल्कं तेन कषायः कण्ठो यस्य तादृशस्य कलहंसस्य राजहंसस्य निनादः शब्दः तद्वत् दीर्घदीर्घेण अतिदीर्घेण स्वरेण च रामभद्रं अनुहरते। भाषायां आत्मनेपदाभावात् अनुहरतीति प्रयोगः। छायायान्तु अनुहरतीत्यपपाठः अनुहरत इत्येवोचितं। 'हरतेर्गतताच्छील्ये' इत्यनेन आत्मनेपदं। गतं प्रकारः। सादृश्यं सततं परिशीलयतीत्यर्थः। रामसदृशो दृश्यते इतियावत्। 'अनुहरन्ते पैतृकमश्वाः मातृकं गावः' इति वत्। मुखचन्द्रेण सम्वदति। तेनतुल्यं दृश्यत इति भावः॥

**कौशल्या** । अम्मो उम्मत्तीभूदं विअ मे हिअअं किं पि चिन्तअन्तो बहु विप्पलवदि । (१)

**जनकः** । (निरूप्य) ।

(क) वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपूर्णप्रतिबिम्बितैव निखिला सैवाऽऽकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

**कौशल्या** । जाद अत्थि दे मादा सुमरसि वा तादं । (२)

**लवः** । नहि नहि ।

**कौशल्या** । तदो कस्स तुमं । (३)

**लवः** । भगवतो वाल्मीकेः ।

**कौशल्या** । अइ जाद कधिदव्वं कधेहि । (४)

**लवः** । एतदेव जानामि ।

(नेपथ्ये)

(ख) भो भोः सैनिका एष खलु कुमारश्चन्द्रकेतुराज्ञापयति न केनचिदाश्रमाऽभ्यर्णभूमिराक्रमितव्येति ।

---

(१) अम्मो उन्मत्तीभूतमिव मे हृदयं किमपि चिन्तयद्बहु विप्रलपति ।

(२) जात अस्ति ते माता स्मरसि वा तातम् ।

(३) ततः कस्य त्वम् ।

(४) अयि जात कथयितव्यं कथय ।

---

(क) वत्साया इति । वत्सायाः जानक्याः रघूद्वहस्य च रामस्य च अस्मिन् शिशौ सम्पूर्णप्रतिबिम्बिता सम्पूर्णं प्रतिबिम्बं तस्य भावः तत्ता निखिला अभिव्यज्यते । सैवाऽऽकृतिः । सा द्युतिः कान्तिः । सा वाणी । विनयोऽपि स एव सहजः स्वाभाविकः । पुण्यानुभावोऽपि असौ । नैतादृशं मम दैवं तदेवं सम्भवेत् । तदाह—हा हा दैवेति मम मनः उत्पथैः उन्मार्गैः पारिप्लवं अतिचञ्चलं यथा स्यात् तथा किं धावति । नैतन्मनसो युक्तं । एतादृशलाभजनकं नास्मद्दैवमिति भावः ॥ २२ ॥

(ख) आश्रमाऽभ्यर्णभूमिः आश्रमसमीपभूमिः ॥

(क) **अरुन्धतीजनकौ** । अये मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः ।

(ख) **कौशल्या** । वच्छलक्खणस्स पुत्तओ आणवेदि त्ति अमिअबिन्दुसुन्दराइं अक्खराइं सुणीअन्ति । (१)

**लवः** । आर्य क एष चन्द्रकेतुर्नाम ।

**जनकः** । जानासि रामलक्ष्मणौ दाशरथी ।

(ग) **लवः** । एतावेव रामायणकथापुरुषौ तत् कथं न जानामि ।

**जनकः** । तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

**लवः** । ऊर्मिलापुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

(घ) **अरुन्धती** । (विहस्य) आविष्कृतं कथाप्रावीण्यं कुमारेण ।

(ङ) **जनकः** । (विचिन्त्य) यदि त्वमीदृशः कथायामभिज्ञस्तद् ब्रूहि तावत् पृच्छामस्तेषां दशरथात्मजानां किन्नामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानीति ।

(च) **लवः** । नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

**जनकः** किं न प्रणीत एव कविना ।

(छ) **लवः** । प्रणीतो न तु प्रकाशितः । तस्यैव कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान् व्यसृजद्भरतस्य मुनेस्तौर्यत्रिकसूत्रकारस्य ।

---

(१) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते ।

---

(क) मेध्यः मेधाय अश्वमेधाय हितः ॥

(ख) अमृतबिन्दुसुन्दराणि । तनये तनयोत्पत्या तस्य च सौशील्यादिगुणवत्तया च प्रौढत्वेन च अमृतबिन्दुसुन्दरत्वं अक्षराणाम् ॥

(ग) रामायणकथापुरुषौ । तावुद्दिश्य तस्याः प्रवृत्तत्वात् ॥

(घ) विहस्य । अननुभूयापि शास्त्रमात्रपरिचयेनोक्तेः हासः । प्रावीण्यं नैपुण्यं ॥

(ङ) अपत्यानि । अयं लवस्य सम्बन्धज्ञानाय प्रश्नः ॥

(च) श्रुतपूर्वः पूर्वश्रुतः श्रुतपूर्वः । 'सुप्सुपा' इतिसमासः ॥

(छ) एकदेशः कथांशः सन्दर्भान्तरेण अन्येन रचनाविशेषेण । नाटकरूपेणेति यावत् । रसवान् करुणविप्रलम्भादिरसवान् अभिनेयार्थः अभिनेतुं दृश्यतामापादयितुं योग्यः अर्थः वाक्यार्थः यस्य तथोक्तः ॥

जनकः । किमर्थम् ।

(क) लवः । स किल भगवांस्तमप्सरोभिः प्रयोजयिष्यतीति ।

(ख) जनकः । सर्वमिदमस्माकमाकूतकरम् ।

(ग) लवः । महती पुनस्तस्मिन् भगवतो वाल्मीकेरास्था । केषांचिदन्तेवासिनां हस्तेन तत् पुस्तकं भरताऽऽश्रमं प्रति प्रेषितं । तेषामानुयात्रिकश्चापपाणिः अप्रमादार्थमस्मद्भ्राता प्रेषितः ।

कौशल्या । भादा वि दे अत्थि । (१)

लवः । अस्त्यार्यः कुशो नाम ।

कौशल्या । जेट्ठो त्ति भणिदं होदि । (२)

(घ) लवः । एवमेतत् प्रसवक्रमेण स किल ज्यायान् ।

(ङ) जनकः । यमजावायुष्मन्तौ ।

लवः । अथ किम् ।

(च) जनकः । कथय कथाप्रबन्धस्य कीदृशः पर्यन्तः ।

(छ) लवः । अलीकपौरप्रवादोद्विग्नेन राज्ञा निर्वासितां देवयजनसम्भवां सीतां देवीमासन्नप्रसववेदनामेकाकिनीमरण्ये परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति ।

---

(१) भ्राताऽपि तेऽस्ति ।

(२) ज्येष्ठ इति भणितं भवति ।

---

(क) तं ग्रन्थं तौर्यत्रिकसूत्रकारस्य अप्सरोभिः प्रयोज्यकर्त्रीभिः ॥

(ख) आकूतकरं आकूतं अभिप्रायं कर्तुं सम्पादयितुं हेतुभूतं अनुकूलं वा । 'कृञो हेतुताच्छील्य'—इति कृञष्टः ॥

(ग) आस्था अतिशयप्रीतिः । आनुयात्रिकः अनु पश्चात् यात्रा यानं तत् प्रयोजनमस्य तथोक्तः । 'प्रयोजनं' इति ठक् । अप्रमादार्थं अप्रमादः प्रमादस्य अनवधानतायाः अभावः सावधानता तदर्थं । क्रियाविशेषणमेतत् ॥

(घ) प्रसवक्रमेण मातृतः उत्पत्तिक्रमेण ज्यायान् ज्येष्ठः । वृद्धशब्दात् ईयसुन् 'ज्य च' इति ज्यादेशः ॥

(ङ) यमजौ यमजौ ॥

(च) पर्यन्तः अवधिः ॥

(छ) अलीकेन अनृतेन पौराणां प्रवादेन उद्विग्नेन भीतेन एकाकिनीं असहायां । 'एकादाकिनिच्चासहाये' इति आकिनिच् 'ऋन्नेभ्यो ङीप्' इति ङीप् ॥

(क) **कौशल्या** । हा वच्छे मुद्धचन्दमुहि को दाणीं दे कुसुमभूदस्स सरीरस्स देव्वदुव्विलासपरिणामो एकल्लिआए णिवडिदो । (१)

**जनकः** । हा वत्से ।

(ख) **नूनं त्वया परिभवं च नवं च घोरं**
**तां च व्यथां प्रसवकालकृतामवाप्य ।**
**क्रव्याद्गणेषु परितः परिवारयत्सु**
**संत्रस्तया शरणमित्यसकृत् स्मृतोऽस्मि ॥ २३ ॥**

**लवः** । ( अरुन्धतीं प्रति ) आर्ये कावेतौ ।

**अरुन्धती** । इयं कौसल्याऽयं जनकः ।

(ग) **लवः** । ( सबहुमानखेदकौतुकं पश्यति ) ।

(घ) **जनकः** । अहो दुर्मर्यादिता पौराणाम् । अहो रामस्य राज्ञः क्षिप्रकारिता ।

---

(१) हा वत्से मुग्धचन्द्रमुखि क इदानीं ते कुसुमभूतस्य शरीरस्य दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ।

---

(क) मुग्धः सुन्दरः । कुसुमभूतस्य पुष्पोपमस्य । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । दैवस्य दुर्विलासः दुःखकरं विलसनं क्रीडा तेन हेतुना परिणामः परिपाकः चरमा दशा । एकल्ली इति देश्यं । संस्कृते एकला नास्ति । निपतितः आपतितः ॥

(ख) **नूनमिति** । त्वया नवं अननुभूतपूर्वं घोरं च दारुणं च । नवं चेति चकारोऽस्थानपतितः । परिभवं चेति चकार इतरेतरतार्थद्योतकः । परित्यागरूपं । तां अतिदुःखजनकां प्रसवकालकृतां व्यथां वेदनां च अवाप्य । परितः सर्वतः क्रव्यादां आममांसभक्षकाणां व्याघ्रादीनां गणेषु परिवारयत्सु सत्सु संत्रस्तया अतिभीतया शरणं । तात त्वं शरणं रक्षको भव इति वाक्यार्थे शरणमिति वाक्यैकदेशप्रयोगः । असकृत् पौनःपुन्येन स्मृतोऽस्मि नूनम् ॥ २३ ॥

(ग) सीतायां अयं तात इति बहुमानः । दुःस्थितं दृष्ट्वा खेदः । बाल्यात्कौतुकम् ॥

(घ) दुर्मर्यादिता मर्यादाभावः । क्षिप्रकारिता अविचार्यकारित्वम् ॥

(क) एवं वैशसघोरवज्रपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं धगित्यवसरश्चापेन शापेन वा ।

कौशल्या । भअवदि परित्ताहि परित्ताहि पसादेहि रुसिदं राएसिं । (१) 290

(ख) अरुन्धती । एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।
राजन्नपत्यं रामस्ते पाल्याश्च कृपणाः प्रजाः ॥ २४ ॥

(ग) जनकः । शान्तं वा रघुनन्दने तदुभयं तत् पुत्रभाण्डं हि मे

---

(१) भगवति परित्रायस्व परित्रायस्व प्रसादय रुषितं राजर्षिम् ।

---

(क) एवमिति । एवं प्रकारेण वैशसं अतिविरुद्धसीतात्यागतदपवादादि तदेव घोरं वज्रं तस्य पतनं । शश्वत् मुहुर्मुहुः उत्पश्यतः चिन्तयतो मे मम क्रोधस्य कोपाऽनलस्य धिक् इति ज्वलनशब्दानुकरणं । ज्वलितुं अवसरः कालः । 'कालसमयवेलासु तुमुन्' इति तुमुन् । तत्र बहुवचननिर्देशेन पर्यायग्रहणात् चापेन क्षत्रियत्वात् सर्वान् दुःखकारिणो रामादीन् युद्धे निपात्य वैरनिर्यातनं सम्पादयेयं । उत शापेन । स्वस्य राजर्षित्वेन शापं दत्वा तान् जीवितात् भ्रंशयेयमिति अर्थोक्तिः अतिक्रोधसूचिका । राजर्षिपदेन शापदानयोग्यता ध्वन्यते ॥

(ख) एतद्धीति । हि यतः परिभूतानां परैः परामर्षं प्रापितानां मनस्विनां धीराणां दुःखं स्वीयदुरदृष्टफलत्वेन जानतां एतत् वैशसघोरवज्रपतनं परोक्तापवादादिजन्यदुःखानुभवः प्रायश्चित्तं एतत् दुःखदुरदृष्टनिवर्तकं । एवं प्रायश्चित्तदातृषु रामादिषु कोपोऽत्यन्तमनुचित इति भावः । किञ्च पापनिवृत्तौ च सुखमेवातः उत्पत्स्यते इति व्यंग्यं । अतः कारणात् राजन् रामः तेऽपत्यं । पुत्रजामात्रोरविशेषात् अपत्यत्वाऽऽरोपः । यद्वा दौहित्रोत्पादकत्वेन अपतनहेतुः । ययातिराज्ञो हि दौहित्रैरेवोद्धृतत्वात् । कृपणाः दीनाः प्रजाः पौराः जानपदाश्च पाल्याः । राज्ञां प्रजापालनस्य धर्मत्वात् । एवं च रामादीनां जन्मान्तरीयपापनिवर्तकदुःखानुभवरूपप्रायश्चित्तप्रयोजकत्वेन उपकारितया रामे अपत्यत्वेन प्रजासु पाल्यत्वेन च वैरित्वाभावेन वैरशुद्धिः चापशापाभ्यामत्यन्तानुचितेति ध्वन्यते ॥ २४ ॥

(ग) शान्तंवेति । तत् उभयं चापशापरूपं रघुनन्दने तद्विषये शान्तमुपरतं निवृत्तं वा । हि यतः तत् रघुनन्दनः । भाण्डशब्दे नपुंसकत्वेन तच्छब्दस्य नपुंसकत्वं । शैत्यं हि यत् सा प्रकृतिर्जलस्येतिवत् । मे मम पुत्रभाण्डं पुत्ररूपं मूलधनं तद्वत् अतिशयेन रक्षणीयं । भूयिष्ठाः अतिशयेन बहवः द्विजाः ब्राह्मणादयः बालाः वृद्धाः विकलाः विकलाङ्गाः पङ्ग्वादयः विकलेन्द्रियाः अन्धादयश्च क्षीणानि

भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २५ ॥

(प्रविश्य)

(क) संभ्रान्ता बटवः । अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेषु श्रूयते सोऽयमधुनास्माभिः प्रत्यक्षीकृतः ।

(ख) लवः । अश्व इति पशुसमाम्नाये सांग्रामिके च पठ्यते । तद् ब्रूत कीदृशः ।

बटवः । श्रूयताम् ।

(ग) पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं वाऽऽख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ २६ ॥

(इत्युपसृत्य अजिने हस्तयोश्चाकर्षन्ति)

लवः । (सकौतुकोपरोधविनयम्) । आर्याः पश्यत पश्यतैभिर्नीतोऽस्मि । (इति त्वरितं परिक्रामति)

(घ) अरुन्धतीजनकौ । पूरयतु कौतुकं वत्सः ।

---

स्त्रीसमूहाश्च यस्मिन् तथाभूतः पौरः जनः । पुत्रभाण्डं इति अनुषज्यते । अत्र वा-शब्दश्चार्थे स च पौरसमुच्चायकः अतः रघुनन्दने पौरजने च तदुभयं शान्तमित्यन्वयः अत्र वा शब्दो अस्थानस्थः ॥ २५ ॥

(क) जनपदेषु राजपालितेषु देशेषु विद्यमानः । एतेन तेषां अप्रत्यक्षयोग्यता सूच्यते ॥

(ख) पशुसमाम्नाये पशूनां स्वरूपनिर्णायके वेदे । एतेन तेषां तद्वेदाध्येतृत्वेन ब्राह्मणत्वं सूचितं । सांग्रामिके च युद्धशास्त्रे च । एतेन तस्य क्षत्रियत्वं प्रकटितम् ॥

(ग) **पश्चादिति** । अत्ति भक्षयति । शकृत्पिण्डकान् पिण्डाऽऽकाराणि पुरीषाणि आम्रमात्रान् प्रमाणे 'मात्रच्' । आम्रप्रमाणान् प्रकिरति विक्षिपति । आख्यातैः तदाकारवर्णनैः साध्यं किं । क्षेपे किंशब्दः । साध्यं नास्ति । इह साधनक्रियां प्रति आख्यातं करणं । सः अश्वः । पुनः वाक्यालङ्कारे । दूरं व्रजति । लव त्वं एहि एहि । सम्भ्रमात् द्विरुक्तिः । वयं त्वं च यामः । 'अस्मद्युत्तमः' इत्यस्य परत्वात् उत्तमपुरुषः ॥ २६ ॥

(घ) अश्वदर्शनात्—कौतुकं । वयस्यानां उपरोधः अनुरोधः । वृद्धेषु जनकादिषु विनयः । तैः सहितं यथा तथा ॥

**कौशल्या** । भअवदि जाणामि एदं अणालोअअन्ती ण जीआमि विअ अदो अण्णदो भविअ पेक्खह्म दाव गच्छमाणं दीहाउं । (१)

**अरुन्धती** । दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

(प्रविश्य)

**कञ्चुकी** । भगवान् वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

**जनकः** । अतिगम्भीरमेतत् किमपि भविष्यति । भगवति अरुन्धति सखि कौशल्ये आर्य गृष्टे स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्य मः । (निष्क्रान्तो वृद्धवर्गः)

**वटवः** । पश्यतु कुमारस्तदाश्चर्यम् ।

(क) **लवः** । दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्व इति ।

**वटवः** । कथं ज्ञायते ।

(ख) **लवः** । ननु मूर्खाः पठितमेव युष्माभिस्तत्काण्डे । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारस्तत्प्रायमेव बलमिदं दृश्यते । यदीह न प्रत्ययस्तद्गत्वा पृच्छत ।

(ग) **वटवः** । भो भोः किंप्रयोजनोऽयमश्वः परिवृत्तः पर्यटति ।

**लवः** । (सस्पृहमात्मगतम्) अये अश्वमेध इति विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षात्रियपरिभावी महानुत्कर्षनिष्कर्षः । (नपथ्ये)

(घ) **अयमश्वः पताकेयमथवा वीरघोषणा ।**

---

(१) भगवति जानाम्येतमनालोकयन्ती न जीवामीवातोऽन्यतो भूत्वा प्रेक्षामहे तावद्गच्छन्तं दीर्घायुषम् ।

---

(क) आश्वमेधिकः अश्वमेधः प्रयोजनं फलं यस्य तथोक्तः ॥

(ख) तत्काण्डे अश्वमेधप्रकरणे । कवचिनः कवचवन्तः दण्डिनः दण्डवन्तः निषङ्गिणः तूणीरवन्तः । तत्प्रायं तद्बहुलं । प्रत्ययः विश्वासः ॥

(ग) सस्पृहं स्वस्य क्षत्रियत्वे अश्वमेधे स्पृहा । ऊर्जस्वलः अत्यूर्जितः । उत्कर्षस्य सर्वातिशयस्य निष्कर्षः सारः ॥

(घ) **अयमश्व इति** । इयं पताका सौभाग्यं । ' पताका वैजयन्ती स्यात्सौभाग्येऽ

सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥

(क) लवः । (सव्यथमिव) अहो सन्दीपनान्यक्षराणि ।

बटवः । किमुच्यते । प्राज्ञः खलु कुमारः ।

लवः । भो भोस्तत् किमक्षत्रिया पृथ्वी यदेवमुदीर्यते ।

(नेपथ्ये)

अरे महाराजं प्रति कुतः क्षत्रियाः ।

(ख) लवः । धिग्जाल्मान् ।

(ग) यदि ते सन्ति सन्त्येव केयमन्या विभीषिका ।
किमुक्तैः शरसम्बाधां पताकां वो हराम्यहम् ॥ २८ ॥

(घ) भो भो बटवः लोष्टैर्घ्नन्तः परावर्तयतैनमश्वम् । एष रोहितानां मध्ये वराकश्चरतु ।

(प्रविश्य)

(ङ) सक्रोधदर्पः पुरुषः । धिक् चापलं किमुक्तवानसि तीक्ष्णनीरसा ह्यायुधीयश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुर-

---

द्रे ध्वजेऽपि च' इति विश्वः । अथवा वीरघोषणा वीरडिण्डीरयः वीरत्वस्य उच्चैर्घोषणं । 'उच्चैर्घुष्टं तु घोषणा' इत्यमरः । सप्तसु लोकेषु एकवीरस्य प्रधानवीरस्य । 'एके मुख्यान्यकेवलाः' इत्यमरः । तदेव स्पष्टयितुं विशेषणं--दशकण्ठकुलं रावणकुलं द्वेष्टि तस्य रामस्य ॥ २७ ॥

(क) सन्दीपनानि क्रोधोद्दीपकानि ॥

(ख) जाल्मान् असमीक्ष्यकारिणः । 'जाल्मोऽसमीक्ष्यकारी स्या'—दित्यमरः ॥

(ग) यदीति । ते भवतां स्वामिनः रामादयः वीराः सन्ति सन्त्येव । यद्वा भवदधिक्षिप्ताः क्षत्रियाः सन्ति यत्र कुत्रचित् ते सन्त्येव । भवत्कृताधिक्षेपेण किं फलमिति भावः । अन्या लोकविलक्षणा सर्वाधिक्षेपिका विभीषिका भयप्रदर्शनं वचनं । नह्यनेन वाङ्मात्रेण वीरा बिभ्यतीति भावः । उक्तैः वचनैः मदीयैः किं । नहि युगमिव वयं वचनमात्रेण भीषयेमेति भावः । शरसम्बाधां पत्रिसङ्कुलां कृत्वा वः तां पताकां अश्वरूपं सौभाग्यं हरामि ॥ २८ ॥

(घ) परिवृत्य अश्वमिति शेषः । अन्तर्भावितण्यर्थः । परिवार्य । लोष्टैः मृत्पिण्डैः अपघ्नन्तः ताडयन्तः । रोहितानां ऋश्याऽऽख्यमृगाणां । तेषां अश्वसादृश्यात् वराकः तुच्छः चरतु गच्छतु । अथवा तृणं भक्षयतु । प्रसिद्धकर्मकत्वात् अकर्मकत्वम् ॥

(ङ) चापलं बालजनितं । तीक्ष्णनीरसाः स्वल्पेनाऽपि अपराधेन ये कुप्यन्ति ते तीक्ष्णाः नीरसाः निष्प्रेमाणः अतिनिष्ठुराः । आयुधीयश्रेणयः आयुधेन चरन्ति ते आयुधीयाः 'आयुधात् छ च' इति छप्रत्ययः । तेषां श्रेणयः पंक्तयः । शिशोः अपि

रिविमर्द्दनः सौम्यपूर्वारण्यदर्शनकुतूहलाऽऽक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।

(क) वटवः । कुमार कृतमनेनाश्वेन तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधीयश्रेणयो दूरे चाऽऽश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे ।

लवः । (विहस्य) किं नाम विस्फुरन्ति शस्त्राणि । (धनुरारोपयन्) ।

(ख) ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ २९ ॥

(ग) (इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे)

कौशल्याजनकयोगो नाम

चतुर्थोऽङ्कः ।

---

बालस्याऽपि दृप्तां गर्वितां । सौम्येति सौम्यस्य सौमरयेव दर्शनीयस्य 'शाखादिभ्यो यः' इति इवार्थे यः । 'प्रज्ञाद्यण्' । मनोहारिण इति यावत् । पूर्वोऽरण्यस्य पूर्वदेशस्थस्य अरण्यस्य दर्शनकौतुकेन आक्षिप्तं आकृष्टं हृदयं यस्य सः । यावदायाति आयास्यति एव । यावच्छब्दो निश्चये । भविष्यतीत्यनुवर्तमाने 'यावत्पुरानिपातयोर्लट्' । तरुगहनेन तरुभिः वृक्षैः गहनेन गंभीरेण दुरवगाहेन अपसर्पत पलायध्वम् ॥

(क) कृतं अलं साध्यं नास्ति । तर्जयन्ति भर्त्सयन्ति । हरिणप्लुतैः हरिणानां इव प्लुतैः गमनैः पलायामहे । परापूर्वकात् अयतेर्लट् 'उपसर्गस्याऽयतौ' इति लत्वं ॥

(ख) ज्याजिह्वयेति । ज्या मौर्वी सैव जिह्वा तया । वलयिते आश्लिष्टे उत्कटे महत्यौ कोटी अटन्यौ ते एव दंष्ट्रे यस्य तत् । उद्गारी उद्गच्छन् घोरः भयङ्करः घनः निबिडः घर्घरः तदाकारः घोषः शब्दः यस्य तथा एतत् चापं । ग्रासाय सर्वजगतां ग्रसनाय भावे 'घञ्' । प्रसक्तस्य उद्यतस्य हसतः हास्यं कुर्वतः अन्तकस्य कृतान्तस्य यद्वक्त्रं मुखं तदेव यंत्रं तस्य या जृम्भा जृम्भणं प्रसारणं तद्विडम्बि तदनुकरणशीलं विकटं विशालं उदरं अभ्यन्तरभागः यस्य तत् अस्तु भवतु । अयं वीरो रसः ॥२९॥

(ग) इति भावभूतार्थबोधिन्यां चतुर्थोऽङ्कः समाप्तः ॥

# पंचमोऽङ्कः ।

( नेपथ्ये )

भो भोः सैनिका जातं जातमवलम्बनमस्माकम् ।

(क) नन्वेष त्वरितसुमन्त्रनुद्यमान-
व्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः
श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

(ख) ( ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः )

चन्द्रकेतुः । आर्य सुमन्त्र पश्य पश्य ।

(ग) किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रनवरतनिगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

आश्चर्यमाश्चर्यम् ।

---

(क) **नन्वेष इति** । त्वरितं यथा तथा सुमंत्रेण तदाख्येन सारथिना नुद्यमानाः प्रेर्यमाणाः व्यावल्गन्तः ह्रेषमाणाः प्रजवनाः अतिवेगवन्तः वाजिनः अश्वाः यस्य तेन रथेन । उद्घातेन रथोद्घातेन प्रचलितः कोविदाराङ्कितः केतुः यस्य सः चन्द्रकेतुः । वः युष्माकं प्रधनं युद्धं श्रुत्वा उपैति आगच्छति । अयुतावृतिरूपं पादांतवर्णयमकं शब्दालङ्कारः ॥ १ ॥

(ख) एकेन बालेन अनेकैर्युद्धकरणादद्भुतत्वं । एतादृशमहावीरलाभेन हर्षः । क्षणमुपेक्षणे सकलसैन्यनाश इति सम्भ्रमः त्वरा तेन सहितः ॥

(ग) **किरतीति** । कलितेन उद्भूतेन किञ्चित्कोपेन ईषत्क्रोधेन रज्यन्ती लोहितायमाना मुखश्रीः वदनकान्तिः यस्य तथोक्तः । चञ्चन्त्यः युद्धव्यापारवशेन चञ्चलाः पञ्चसङ्ख्याः चूडाः यस्य सः । कोऽपि लोकाद्भुतरसः अयं पुरोवर्ती वीरपोतः वीरो बालः । अनवरतं सततं निगुञ्जन्ती शब्दं कुर्वन्ती कोटिः यस्य तेन । कार्मुकेण धनुषा । चमूनां सेनानां उपरि । शरतुषारं तुषाराऽऽकारान् शरान् किरति वर्षति । मंगोपमा व्यङ्ग्या ॥ २ ॥

(क) मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

सुमन्त्रः । आयुष्मन् ।

(ख) अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥४॥

(ग) चन्द्रकेतुः । इममेकमुद्दिश्य भूयसामारंभ इति हृदयमपत्रपते ।

(घ) अयं हि शिशुरेककः समरभारभूरिस्फुरत्-
करालकरकन्दलीकलितशस्त्रजालैर्बलैः ।

---

(क) मुनीति । दलितेषु बाणैर्भग्नेषु करिणां गजानां कपोलग्रन्थिषु कपोलसन्धिबन्धेषु टङ्कारैः टमित्याऽऽकारैः धनुश्शब्दैः घोरं यथा तथा ज्वलितानि शरसहस्राणि यस्य सः । एकः असहायः मुनिजनशिशुः मुनिबालः । रघुवंशस्य तत्तुल्यस्य वंशस्य वेणोः । अप्रसिद्धः नवोद्गतः प्ररोहः अंकुरः करीर इव । रघुवंशादन्यत्र एतादृशवीरप्ररोहस्याभावे अस्मिन् रघुवंशभवत्वेन उत्प्रेक्षा । सैन्यकाये सैन्यव्यूहे मे कौतुकं करोति । अयं अद्भुतो रसः । एकेन मुनिबालेन अनेन सर्वसैन्यशिरसि शरकिरणादद्भुतत्वं ॥३॥

(ख) अतिशायितेति । सुरासुराणां देवदैत्यानां प्रभावः वीर्यं आतिशयितः अतिक्रांतः येन तं । तवैव तुल्यं रूपं यस्य एवंभूतं शिशुं अवलोक्य । कुशिकसुतस्य विश्वामित्रस्य मखं यज्ञं द्विषन्ति ये तेषां राक्षसानां मारीचादीनां प्रमाथे युद्धे । धृतं धनुः येन तं रघुनन्दनं स्मरामि । स्मृत्यलङ्कारः । पुष्पिताग्रावृत्तं ॥ ४ ॥

(ग) अपत्रपते लज्जति ॥

(घ) अयमिति । अयं पुरोवर्ती एककः एकाकी । 'एकादाकिनिच्चासहाये' इति चात् 'कन्' । समरभारे युद्धव्यापारे दुर्वहत्वात् भारत्वं भूरि अतिशयितं स्फुरन्ति दीप्यमानानि करालानि भयङ्कराणि करकन्दलीभिः हस्तरूपैः वृक्षविशेषैः 'कन्दली तु मृगवृक्षविशेषयोः' इति विश्वः । कलितानि धृतानि शस्त्रजालानि आयुधसमूहाः येषां तैः । 'जालं समूह आनाये' इत्यमरः । क्वणन्तीभिः शब्दायमानाभिः कनकस्य सुवर्णस्य किङ्किणीभिः क्षुद्रघण्टिकाभिः झणझणायिताः झणझणेति शब्दं कुर्वतः

क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदवारिदैरावृतः ॥ ५ ॥

(क) सुमन्त्रः । वत्स एभिः समस्तैरपि किमस्य किं पुनर्व्यस्तैः ।

(ख) चन्द्रकेतुः । आर्य त्वर्यतां त्वर्यतामनेन हि महानाश्रितजनप्रमाथोऽस्माकमारब्धः । तथाहि ।

(ग) आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुव-
स्तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणा इव ॥ ६ ॥

(घ) सुमन्त्रः । (स्वगतम्) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीयाम् । (विचिन्त्य) अथवेक्ष्वाकुगृहवृद्धाः खलु वयं । प्रत्युपस्थिते रणे च का गतिः ।

---

स्यन्दनाः रथाः येषु तैः । अमन्दः अनल्पः मदः स एव दुर्दिनं वर्षं येषां तैः द्विरदाः वारिदाः मेघा इव येषु तैः । उपमेयं । बलैः आवृतोऽस्ति । एकस्य शिशोः सर्वैः सैन्यैरावरणेन मम चेतसि लज्जाऽऽविर्भवतीति भावः । अद्भुतरसः । पृथ्वीवृत्तं ॥ ५ ॥

(क) समस्तैः । किं पुनर्व्यस्तैः । एवञ्च सर्वे इमे व्यस्ताः समस्ताश्च तुच्छा इति भावः ॥

(ख) आश्रितानां जनानां प्रमाथः प्रमथनं ॥

(ग) **आगुञ्जदिति** । अयं वीरः । आगुञ्जन्तीभिः अतिगर्जन्तीभिः गिरिकुञ्जेषु कुञ्जराः गजाः तेषां घटाभिः विस्तीर्णः वृद्धिं नीतः अतएव ज्वररूपः तं । यद्वा कुञ्जरघटानां विस्तीर्णयोः कर्णयोः ज्वरतुल्यः पीडाजनकः तं । ज्यानिर्घोषं मौर्वीशब्दं अमन्दैः महद्भिः दुन्दुभीनां रवैः शब्दैः आध्मातं प्रवृद्धं उज्जृम्भयन् उत्पादयन् सन् भुवः रणभूमीः वेल्लतां गच्छतां भैरवाणां भयङ्कराणां रुण्डानां कबन्धानां मुण्डनिकरैः शिरसां समूहैः तृप्यतः कालस्य कृतान्तस्य करालं यद्वक्त्रं मुखं तस्य विघसैः भोजनशेषैः विकटमुखात् अधः पतितैः व्याकीर्यमाणाइव इतस्ततः प्रक्षिप्यमाणा इव विधत्ते करोति । अनेन हि वीर्येण सनिर्घोषेण धनुषा विक्षिप्तैः शरैः निपतितमुण्डानां रुण्डानां तृप्यता कालेन भुक्त्वा त्यक्तैः मुण्डैः सर्वाः भुवः व्याकीर्णा इति । इयं आरभटीरीतिः । वीराद्भुतौ रसः । ओजो गुणः ॥ ६ ॥

(घ) सम्प्रहारं युद्धं अनुजानीयां स्वानुमतीकुर्यां । इक्ष्वाकुगृहवृद्धाः इक्ष्वाकूणां गृहेषु आशैशवात् स्थित्वा वृद्धिं प्राप्ताः अतः ईदृशात् युद्धान्निवृत्तिं कथं अनुजानीमः । प्रत्युपस्थिते प्राप्ते च युद्धे का गतिः क उपायः । एवञ्चात्र उपायान्तराभावेन

(क) चन्द्रकेतुः । (सविस्मयलज्जासंभ्रमम्) धिक् प्रतिनिवृत्तानि सर्वतः सैन्यानि मम ।

(ख) सुमन्त्रः । (रथवेगमभिनीय) आयुष्मन् एष वाग्विषयीभूतः स वीरः ।

(ग) चन्द्रकेतुः । (विस्मृतिमभिनीय) । आर्य किमस्य नामधेयमाख्यातमाख्यायकैः ।

सुमन्त्रः । लव इति ।

(घ) चन्द्रकेतुः । भो भो लव महाबाहो किमेभिस्तव सैनिकैः
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

सुमन्त्रः । कुमार पश्य पश्य

(ङ) व्यपवर्तत एष बालवीरः पृतनानिर्मथनात् त्वयोपहूतः ।
स्तनयित्नुरवाद्दिभावलीनामवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

---

इक्ष्वाकूणां अनिवृत्तित्वरूपकुलधर्मेण च अस्माकं इक्ष्वाकुकुलवृद्धत्वेन च चन्द्रकेतोः युद्धे प्रवर्तनं वरमिति भावः ॥

(क) सविस्मयेति एकेन अनेकेषां पराभवात् विस्मयः । स्वसैन्यानां निवर्तनेन लज्जा । सर्व सैन्यनिवृत्या च तेन सह युद्धार्थं त्वरा तया सम्भ्रमः ॥

(ख) वाग्विषयीभूतः वाचां संलापानां मिथो भाषणानां विषयीभूतः गोचरीभूतः । अस्मदालापश्रवणयोग्ये सन्निहिते देशे स्थित इति यावत् ॥

(ग) आख्यायकैः वार्तावेदिभिः दूतैः आख्यातं कथितम् ॥

(घ) भो भोः । आदरे द्विरुक्तिः । तव एभिः सैनिकैः किं । हतैरितिशेषः । एभिस्तुच्छैर्हतैः न काश्चित् कीर्तिलाभइति भावः । यद्वा तवैव सैनिकैः ये मम सैनिकाः ते तवैव सैनिकाः तेषां हनने न किञ्चित्फलं प्रत्युत तवैव हानिरितिभावः । यथा दीपज्योतिः महति सूर्यज्योतिषि लीनं भवति तथा त्वत्तेजः महति मत्तेजसि शाम्यतु लीनं भवतु । एतेन गर्वो व्याभिचारीभाव उक्तः ॥

(ङ) व्यपवर्तत इति । एषः बालवीरः । अत्र वीरबाल इति वक्तुं योग्यं । कर्मधारये 'पूर्वापरे'–ति सूत्रेण वीरशब्दस्य पूर्वनिपातनियमात् च्युतसम्स्कृतित्वदोष आपद्येत । पृतनानां सेनानां निर्मथनात् व्यपवर्तते परावर्तते । दृप्तः सिंहशावः सिंहशिशुः इभाऽऽवलीनां गजपंक्तीनां अवमर्दात् मर्दनात् इव स्तनयित्नुरवादिति निवृत्तौ हेतुः । उपमेये त्वयोपहूत इति हेतुगर्भं विशेषणं । उपमालङ्कारः ।

(क) ( ततः प्रविशति त्वरितोद्धतक्रमो लवः )

(ख) लवः । साधु राजपुत्र साधु सत्यमैक्ष्वाकः खल्वसि तदयं परागत एवास्मि ।

( नेपथ्ये महान् कलकलः )

(ग) लवः । ( साऽऽवेगं परावृत्य ) आः कथमिदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्यवष्टभ्य निघ्नन्ति मां चमूपतयः । धिग्जाल्मान् ।

(घ) अयं शैलाऽऽघातक्षुभितवडवावक्त्रहुतभुक्-
प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पन् बलतुमुलहेलाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

( इति परिक्रामति )

चन्द्रकेतुः । भो भोः कुमार

---

(क) त्वरितोद्धतक्रमः वीरेण आह्वानात् त्वरायुक्तः उद्धतः विकटः क्रमः पादविक्षेपो यस्य सः ॥

(ख) ऐक्ष्वाक इति निर्भयत्वं व्यनक्ति ॥

(ग) साऽऽवेगं आवेगः उद्वेगः । इतो वीरेणाऽऽह्वानात् पुनर्युद्धार्थं सैनिकैरनुगमनात् चित्ते उद्वेगः सम्पन्न इति भावः । भग्नाः मया शस्त्रेण विमुखीकृताः । पर्यवष्टभ्य युद्धदर्पेण आत्मानं संस्थाप्य । युद्धाभिसारिणः युद्धाय मां अभिसरन्ति तथाभूताः चमूपतयः सैनिकाः मां घ्नन्ति हिंसन्ति । हे जाल्माः मत्तः भाविनं स्वनाशं अविचार्य युद्धाभिसारिणः युष्मान् धिक् ॥

(घ) **अयमिति** । अयं समन्तात् सर्वतः उत्सर्पन् प्रसरन् । बलस्य सैन्यस्य तुमुला सङ्कुला या हेला क्रीडा 'तुमुलं रणसङ्कुले' । हेला लीले—ति चाऽमरः । तत्सम्बन्धी यः कलकलः कोलाहलः । मे मम शैलानां पर्वतानां आघातेन ताडनेन क्षुभितः क्षोभं प्राप्तः यः वडवावक्त्रहुतभुक् वडवाऽनलः स एव प्रचण्डो यः क्रोधः तस्य अर्चिर्निचयः ज्वालासमूहः तस्य कवलत्वं ग्रासत्वं व्रजतु । पयोराशेः समुद्रस्य प्रलयपवनेन प्रलयवातेन आस्फालितः चालितः ओघ इव । समुद्रस्य महौघो यथा वडवानलं प्राप्य नश्यति तथा मत्क्रोधं प्राप्य भवतां कलकलो नश्यत्विति भावः ॥ ९ ॥

(क) अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

(ख) लवः । (सहर्षसंभ्रमं पराऽऽवृत्य) अहो महानुभावस्य प्रसन्नस्वरकर्कशवीरवचनप्रयुक्तिर्वैकर्तनकुलकुमारस्य । तत्किमेभिरेनमेव तावत् संभावयामि ।

(पुनर्नेपथ्ये कलकलः)

(ग) लवः । (सक्रोधनिर्वेदम्) आः कदर्थितोऽहमेभिर्वीरसंवादविघ्नकारिभिः पापैः । (तदभिमुखं परिक्रामति)

(घ) चंद्रकेतुः । आर्य दृश्यतां द्रष्टव्यमेतत्

(ङ) दर्पेन कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।

---

(क) अत्येति । अत्यद्भुतात् सर्वलोकोत्तरात् गुणानां अतिशयात् मे प्रियोऽसि । तस्मात् प्रियत्वादेव सखा त्वमसि । तस्मात् यन्मम सैन्यं तत्तवैव । तत् ततो हेतोः निजे स्वीये परिजने कदनं किं करोषि । इदमत्यनुचितं त्वादृशस्येति भावः । इयं चाटूक्तिः । एष चन्द्रकेतुः तव दर्पनिकषः दर्पनाशकः । यद्वा निकषः निकषोपलः सुवर्णपरीक्षापाषाणः । यथा निकषः सुवर्णं परीक्षते तथाऽहं तव वीरत्वदर्पं परीक्षे इति भावः । इयं गर्वोक्तिः ॥ १० ॥

(ख) सहर्षसंभ्रमं वीरसमागमात् हर्षः । युद्धार्थे संभ्रमः त्वरा । प्रसन्नः स्वरो यस्याः सा प्रसन्नेन कण्ठेन प्रयुक्ता प्रसादगुणवती वाक् । पूर्वश्लोके चरणत्रयेण प्रयुक्तेति भावः । चतुर्थे चरणे गर्वोक्त्या कर्कशा वीरवचनप्रयुक्तिः वीरवचनयोजना । वैकर्तनेति विकर्तनस्य सूर्यस्य इदं । एभिः चमूपतिभिः किं । नकिञ्चित्प्रयोजनमिति भावः । सम्भावयामि रणकर्मणा सत्करोमि ॥

(ग) वीरेति वीरेण चन्द्रकेतुना सह संवादस्य विघ्नं कुर्वद्भिः अतएव पापैः कदर्थितः कुत्सितः अर्थः प्रयोजनं कदर्थः 'कोः कत्तत्पुरुषेऽचि' इति कदादेशः । तद्वान् कृतः कदर्थितः । मतुबन्तात् णिचि क्तान्त रूपं निष्प्रयोजनं तद्भषकरणात् कुत्सितप्रयोजनोऽहं सम्पन्न इति भावः ।

(घ) द्रष्टव्यं अवश्यं द्रष्टुं योग्यम् ॥

(ङ) दर्पेणेति । कौतुकवता विस्मयवता दर्पेण गर्वेण । मयि बद्धं लक्ष्यं येन सः मदभिमुखं धावमानः । पश्चाद्बलैः अस्मत्सैन्यैः अनुसृतः अनुगतः । उदीर्णं धनुः येन सः ।

द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवनचापधरस्य लक्ष्मीम् ॥ ११ ॥

(क) सुमन्त्रः । कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

चन्द्रकेतुः । भो भो राजानः

(ख) संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन् कवचनिचितैर्मेध्यचर्मोत्तरीये ।
कालज्येष्ठैरभिनववयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन वो धिग् धिगस्मान् ॥ १२ ॥

(घ) लवः । ( सोन्माथम् ) कथमनुकम्पते नाम । ( विचिन्त्य ) भवतु कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत् सैन्यानि संस्तम्भयामि ।

( इति ध्यानं नाटयति )

---

'धनुषश्च' इति अनङ् समासान्तः । द्वेधा द्वाभ्यां प्रकाराभ्यां समुद्धतः उच्चलितः मरुत् वायुः तेन तरलस्य विचलितस्य स्वस्थानभ्रष्टस्य माघवनचापधरस्य मघोनः इदं माघवनं यच्चापं तद्धरस्य । माघवतेति पाठे मतुबन्तस्य मघवच्छब्दस्य अण्णन्तस्य रूपं । तस्य मेघस्य लक्ष्मीं शोभां धत्ते धारयति । पदार्थवृत्तिः निदर्शनालङ्कारः ॥ ११

(क) वयंतु विस्मयेन परवन्तः । विस्मयपराऽऽधीनाः सन्तः द्रष्टुमपि न जानीम इति भावः

(ख) संख्येति । द्विरदा तुरगाः स्यन्दनाः रथाश्च तत्स्थैः संख्यामतीतैः असंख्यैः । कवचैः निचितैः व्याप्तैः बद्धकवचैः । कालेन वयसा ज्येष्ठैः । प्रौढैरिति यावत् । भवाद्भिः युष्माभि एकस्मिन् एकत्वसंख्यायुक्ते पदातौ पादाभ्यां गच्छतीति पदातिः तस्मिन् 'अज्यतिभ्यां पादे च' इति इण् प्रत्ययः । 'पादस्यपदे'— ति पदाऽऽदेशः । मेध्यचर्मोत्तरीये मेध्यं पवित्रं चर्म अजिनं उत्तरीयं यस्य तस्मिन् । अभिनवेन बाल्येन वयसा काम्यः इच्छाविषयः कायः देहः यस्य तादृशे । अत्र लवे बाले योऽयं युधि परिकरो बद्धः तेन परिकरबंधनेन वः युष्मान् अस्मांश्च धिक् धिक् । युष्मत्संबंधेन ममापि धिक्कारविषयत्वमिति भावः अत्र एकस्मिन्पदाताविति वक्तव्ये पदातावत्रैकस्मिन्नित्युक्तिः क्रमभगमावहतीति बोध्यं विरोधालङ्कारः ॥ १२ ॥

(ग) सोन्माथम् । चंद्रकेतोर्वचनं श्रुत्वा सव्यथमाह—कथमिति । अनुकंपते दयां करोति । संस्तंभयामि संमोहयामि ॥

सुमन्त्रः । तत् किमकस्मादस्मत्सैन्यघोषः प्रशाम्यति ।

(क) लवः । पश्याम्येनमधुना सुप्रगल्भम् ।

सुमन्त्रः । वत्स मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितम् ।

चन्द्रकेतुः । अत्र कः संदेहः

(ख) व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम्

(ग) पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रन्तःप्रस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवाऽऽस्तीर्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

---

(क) सुप्रगल्भं अस्मदस्त्रनिवारणे सुतरां प्रगल्भं प्रौढं प्रतिभान्वितम् ॥

(ख) **व्यतिकर इति** । तामस: तमस: अन्धकारस्य सम्बंधी । वैद्युतश्च विद्युत्संबंधी च भीम: भयंकर: व्यतिकर: इव संबंध इव । प्रणिहितमपि विषयग्रहणाय प्रयुक्तमपि ग्रस्तमुक्तं तम:संबंधेन ग्रस्तं विद्युत्संबंधेन मुक्तं उन्मीलितं चक्षु: हिनस्ति इव विषयग्रहणासमर्थं करोतीव । किञ्च तत्सैन्यं लिखितमिव चित्रार्पितमिव अस्पंदं चेष्टारहितं आस्ते । अत: अजितवीर्यं न जितं परै: अभिभूतं वीर्यं शक्तिर्यस्य तत् जृम्भकास्त्रं जृम्भते विकसितं भवति । सम्भावनाऽलङ्कार: ॥ १३ ॥

(ग) **पातालोदरेति** । जृम्भकै: नभ: आकाशं अवाऽऽस्तीर्यते आस्तीर्णं क्रियते । कीदृशै: पातालानां उदरेषु अभ्यन्तरेषु ये कुञ्जा: लतापिहितस्थानानि तत्र पुञ्जितं राशीभूतं यत् तम: तद्वत् श्यामै: । अन्त: मध्ये प्रस्फुरत् यत् आरकूटं पित्तलं 'रीति: स्त्रियामारकूट—मित्यमर: । तस्य यानि कपिलानि पिङ्गलानि ज्योतींषि तद्वत् ज्वलन्त्य: दीप्तय: येषां तै: । कल्पाक्षेपे कल्पान्तसमये कठोर: दारुण: भैरव: भयंकरश्च यो मरुत् वायु: तेन व्यस्तै: विपर्ययं नीतै: स्थानादुच्चालितै: । मिलन्तो मेघा: तडितश्च ताभि: कडाराणि पिंगलानि 'कडार: कपिल: पिंग'–इत्यमर: । कुहराणि विवराणि येषां तै: । विन्ध्याद्रे: कूटैरिव शिखरै: इव ॥ १४ ॥

सुमन्त्रः। कुतः पुनरस्य जृम्भकाणामागमः स्यात्।

चन्द्रकेतुः। भगवतः प्राचेतसादिति मन्यामहे।

(क) सुमन्त्रः। वत्स नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु। यतः

**(ख) कृशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः।**
**अथ तत्संप्रदायेन रामभद्रे स्थिता अपि॥ १५॥**

(ग) चन्द्रकेतुः। अपरेऽपि परमोपचीयमानसत्वप्रकाशाः स्वयं हि मन्त्रदृशः पश्यन्ति।

सुमन्त्रः। वत्स सावधानो भव परागतः प्रवीरः।

कुमारौ। (अन्योन्यं प्रति) अहो प्रियदर्शनः कुमारः। (सस्नेहानुरागं निर्वर्ण्य)

**(घ) यदृच्छासंवादः किमु किमु गुणानामतिशयः**
**पुराणो वा जन्मान्तरनिविडबन्धः परिचयः।**
**निजो वा संबन्धः किमु विधिवशात् कोऽप्यविदितो**
**ममैतस्मिन् दृष्टे हृदयमवधानं रचयति॥ १६॥**

---

(क) वत्स नैतदिति। उपपद्यत इति शेषः। एतत् अस्य प्राचेतसात् अस्त्राणां आगम इति एतत्। एवं असम्प्रदायं। अस्त्रेषु विषये नोपपद्यते। अस्त्राणि गुरुसम्प्रदायं विना न प्राप्यन्ते इति भावः। विशेषतः जृम्भकेषु विषये। अस्त्रान्तरात् विशेषतः भिन्नसम्प्रदाय इति भावः॥

(ख) तमेवाह—**कृशाश्वेति**। स्थिता अपि नान्यत्र दृश्यन्ते इति शेषः। असम्प्रदायानि कथमस्मिन् दृश्यन्त इत्यर्थः। इत्याश्चर्यम्॥ १५॥

(ग) परमेति परमं अत्यन्तं उपचीयमानं सत्वं सत्वगुणः तस्मात्प्रकाशः सकलतत्वप्रकाशः येषां ते मन्त्रदृशः ऋषयः पश्यन्ति जृम्भकादीन् इति शेषः॥

(घ) **यदृच्छेति**। यदृच्छया अहेतुना संवादः समागमः किमु। गुणानां एतस्मिन् दृश्यमानानां शौर्यसौजन्यादीनां अतिशयः उत्कर्षः किमु। जन्मान्तरे पूर्वस्मिन् पूर्वतरे वा जन्मनि निबिडः घनः बन्धः स्नेहबन्धः यस्मिन् तथा भूतः पुराणः पूर्वतरः परिचयः किमु। निजः आत्मीयः। वा अथवा इक्ष्वाकुवंशभवत्वाऽऽदिरूपः। विधिवशात् अस्मद्दैववशात् अविदितः अपरिज्ञातः कोऽपि अयं ईदृक् सम्बन्ध इति दुर्विज्ञानः सम्बन्धः। यत् येन हेतुना एतस्मिन् दृष्टे मम हृदयं अवधानं रचयति। येन हेतुना मद्हृदयं एतद्दर्शनप्रवणं भवति तं हेतुं न जानामीत्यर्थः॥ १६॥

(क) सुमन्त्रः । भूयसा जीवधर्म एष यद्रसमयी कस्यचित् क्वचित्प्रीतिः । यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति । तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति ।

(ख) अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहाऽऽत्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ १७ ॥

कुमारौ । ( अन्योन्यं प्रति )

(ग) एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

(घ) किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।

---

(क) भूयसा बाहुल्येन जीवानां धर्मः एषः । तमेवाह—यदिति । रसमयी आनन्दमयी । उपचारः परम्पराप्रवादः तारामैत्रकं ज्योतिश्शास्त्रप्रसिद्धं ग्रहमैत्र्यादि । चक्षूराग कामशास्त्रप्रसिद्धः चक्षुःप्रीतिः । अप्रतिसंख्येयं प्रतिसंख्यातुं गणयितुं परिहर्तुं वा अशक्यं । अनिबन्धनं अकारणं आमनन्ति कथयन्ति ॥

(ख) तदेवाह—अहेतुरिति । अहेतुः अकारणः यः पक्षपातः स्नेहः तस्य प्रतिक्रिया प्रतीकारः नास्ति । हि यतः सः स्नेहाऽऽत्मकः तन्तुः सूत्रं मर्माणि अन्तः गर्भे सीव्यति दृढं बध्नाति । यथा सौचिकः वस्त्रद्वयं स्नेहप्रचुरेण तन्तुना सीव्यति तथा प्रणयिनोः अन्तःकरणे एकीकृत्य स्नेहात्मकस्तन्तुः सीव्यति । करणस्य कर्तृत्वविवक्षा । काष्ठानि पचतीतिवत् विवक्षातः कारकविभक्तयो भवन्ति इति परिभाषणात् ॥ १७ ॥

(ग) एतस्मिन्निति । मसृणितः संस्कारविशेषेण संघट्टितः यो राजपट्टः राजसम्बन्धी वस्त्रविशेषः मणिविशेषो वा तद्वत् कान्ते कमनीये शरीरे कथमिव । इव शब्दो वाक्यालङ्कारे । सायकाः बाणाः मोक्तव्याः मोक्तुं योग्याः । एतादृशे शरीरे सायकमोचनं अयोग्यं । यस्य एतस्य प्राप्तौ मम अङ्गं परिरम्भणाभिलाषात् आलिङ्गने स्पृहातिशयात् । उन्मीलत्पुलककदम्बं उन्मीलत् आविर्भवत् पुलकानां रोमाञ्चानां कदम्बं समूहः यस्मिन् तादृशं आस्ते तिष्ठति ॥ १८ ॥

(घ) किन्त्वेति । किन्तु आक्रान्तं अवलम्बितं कठोरं अतितीक्ष्णं तेजः वीर्यं येन तस्मिन् वीरे शस्त्रं विना का गतिः नाम । नामेति प्रसिद्धौ । शस्त्रं धृत्वा रणो-

किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

(क) सुमन्त्रः । ( लवं निर्वर्ण्य सास्रमात्मगतम् ) हृदय किमन्यथा परिकल्पसे ।

(ख) मनोरथस्य यद्बीजं तद्दैवेनाऽऽदितो हृतम् ।
लतायां पूर्वलूनायां प्रसूनस्याऽऽगमः कुतः ॥ २० ॥

चन्द्रकेतुः । अवतराम्यार्य सुमन्त्र स्यन्दनात् ।

सुमन्त्रः । तत्कस्य हेतोः ।

(ग) चन्द्रकेतुः । यतस्तावदयं वीरपुरुषः पूजितो भवति । अपि च खल्वार्य क्षात्रधर्मस्सम्यगनुगतो भवति । न रथिनः पादचारमायोधयन्तीति शास्त्रविदः परिभाषन्ते ।

---

न्मुखेऽस्मिन् स्नेहे मम रणविमुखता अत्यन्तमनुचितेति भावः । तेन शस्त्रेणापि हि । हिर्निश्चये । किं किम्फलं । यस्य शस्त्रस्य ईदृशः अपरिमितपराक्रमः वीरः पुरुषः विषयः गोचरः न जायेत न भवेत् । वीरपुरुषालाभेऽतितीक्ष्णस्यापि शस्त्रस्य वैफल्यमेवेति भावः । अयमेव वीरः आयुधे उद्यतेऽपि सति । युद्धविमुखं युद्धपराङ्मुखं मां स्नेहोन्मुखमपि किं वक्ष्यति । क्लैब्यमेव प्रकटयिष्यतीति भावः । दारुणरसः दारुणः निष्ठुरः रसः वीररसः यस्मिन् सः वीराणां समयः संकेतः स्नेहक्रमं स्नेहप्रसरं बाधते । युद्धे उद्यते वीरैः स्नेहः कर्तुं न शक्यते इति भावः ॥ १९ ॥

(क) सास्रं सीतास्मरणेन अस्रं अश्रु । अन्यथा अस्मिन् मुनितनयत्वाभावं रामतनयत्वञ्च परिकल्पसे तर्कयसि । आकारमात्रदर्शनेन वृथा ते तर्क इति भावः ॥

(ख) तदेवाह—**मनोरथस्येति** । अयं रामतनयो भविष्यतीति मनोरथस्य मनःसंकल्पस्य यद्बीजं सीतारूपं तत् दैवेन अदृष्टेन आदितः आदावेव हृतं । अत्र व्यतिरेके दृष्टान्तः लतायां पूर्वलूनायां पूर्वछिन्नायां सत्यां । प्रसूनस्य पुष्पस्य आगमः प्राप्तिः कुतः । नैव भवतीति भावः । एवञ्च सीतात्यागे अयं रामतनय इति शङ्काऽतिदूरं गतेति भावः ॥ २० ॥

(ग) पूजितः आदृतः । अस्य भूमिष्ठत्वेन मम च रथस्थत्वेन तदादरणाय मम रथादवतरणमेव युक्तमिति भावः । क्षात्रो धर्मश्चानुगतः अनुगतः अनुसृतः भवति । तमेवाह नेति । पादचारं पदातिं रथिनः रथाऽऽरूढाः न आयोधयन्ति । परिभाषन्ते समयं सूत्रयन्ति ॥

(क) सुमन्त्रः । ( स्वगतम् ) कष्टं बतानुप्रपन्नोऽस्मि ।

(ख) कथं न्याय्यमनुष्ठानं मादृशः प्रतिषेधतु ।
कथं वाऽप्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

(ग) चन्द्रकेतुः । यदा तातमिश्रा अपि पितुः प्रियं सखायं धर्मसंशयेष्वार्यमेव पृच्छन्ति तत् किमार्यो विमृशति ।

सुमन्त्रः । आयुष्मन् एवं यथाधर्ममभिमन्यसे ।

(घ) एष सांग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

चन्द्रकेतुः । प्रतिरूपं वचनमार्यस्य ।

इतिहासं पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

सुमन्त्रः । ( सस्नेहास्रं परिष्वज्य )

(ङ) जातस्य ते पितुरपीन्द्रजितो विजेतु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।

---

(क) बत खेदे । कष्टं आपदं अनुप्रपन्नः प्राप्तोऽस्मि ॥

(ख) आपदमेवाह कथमिति । न्याय्यं न्यायादनपेतं । 'धर्मपथ्यर्थन्यायादनपेते' इति 'यत्' । अनुष्ठानं आचरणं । मादृशः न्यायवेत्ता कथं प्रतिषेधतु । साहसैकरसां साहसं सहसा प्रवृत्तिः स एव एको रसः प्रवर्तको यस्यां तां क्रियां महावीरेणानेन सह युद्धे रथादवतीर्य प्रवृत्तिं कथं वा अनुजानातु अनुज्ञां ददातु । धर्मप्रतिषेधः साहसिके कर्मणि प्रवर्त्तकत्वञ्च वृद्धस्य मम अत्यन्तमनुचितमेवेति भावः । संदेहाऽलङ्कारः ॥ २१ ॥

(ग) तातमिश्राः उपचारे मिश्रशब्दः । रामादयः पितुः सखायं दशरथमित्रं धर्मसंशयेषु धर्मविषयकेषु संशयेषु सत्सु पृच्छन्ति । विमृशति विचारयति ॥

(घ) एष इति । सांग्रामिकः संग्रामभवः । आध्यात्मादित्वात् 'ठञ्' । न्यायः नीतिः । व्यवस्थेति यावत् । वीरचारित्रपद्धतिः वीराणां चारित्रस्य पद्धतिः मार्गः । वीरैः स्वयमनुष्ठितो मार्ग इति यावत् ॥ २२ ॥

(ङ) जातस्येति । इंद्रजितः विजेतुः ते पितुः लक्ष्मणस्यापि वत्सस्य जातस्य

तस्याप्यपत्यमनुगच्छति वीरवृत्तं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

चन्द्रकेतुः । ( सकष्टम् )

(क) अप्रतिष्ठे कुलज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

(ख) सुमन्त्रः । अहह हृदयमर्मदारणान्येतानि चन्द्रकेतोर्वचनानि ।

(ग) लवः । हन्त मिश्रीकृतो रसक्रमो वर्तते ।

(घ) यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन् दृष्टिर्मम कलहकामः पुनरयम् ।
झणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः ॥ २६ ॥

---

अमूनि कति दिनानि नाम। अतिक्रान्तानीति शेषः । तस्याऽपि अपत्यं भवान् वीरचरितं अनुगच्छति । प्रतिष्ठां वंशस्थितिम् ॥ २४ ॥

(क) **अप्रतिष्ठे इति** । अप्रतिष्ठे पुत्रविरहात् प्रतिष्ठारहिते कुलज्येष्ठे रामे । नः अस्माकं कुलस्य का प्रतिष्ठा । इति दुःखेन नः अस्माकं त्रयः पितरः लक्ष्मणभरतशत्रुघ्नाः तप्यन्ते सन्तप्यन्ते । ज्येष्ठस्य पुत्राराहित्येन त्रयाणां पितृणां पुत्रसाहित्यमपि न सुखकरमिति भावः ॥ २५ ॥

(ख) अहह अहहेति खेदे । सीतात्यागस्मरणात् खेदः । हृदयमर्मदारणानि हृदयस्य मर्मणां जीवस्थानानाञ्च दारणानि विदारकाणि ॥

(ग) मिश्रीकृतो रसः । करुणस्य रत्याख्यस्थायिभावस्य वीरस्य अद्भुतस्य च संमेलनात् ॥

(घ) **यथा इति** । इन्दौ चन्द्रे समुपोढे उदिते सति । कुमुदिनी कैरविणी यथा आनन्दं व्रजति । अनया उपमया तस्य निरुपाधिप्रेमाऽऽस्पदत्वं व्यज्यते । पुनःशब्दो वैलक्ष्यण्यद्योतकः । मम अयं बाहुस्तु कलहं कामयते इति कलहकामः तथा भवति । कीदृशः झणझणत्कारेण झणदितिशब्देन क्रूरं अतिकठोरं क्वणितं यस्य तादृशो गुणो मौर्वी यस्य तादृशं तच्चतत् गुञ्जत् शब्दं कुर्वत् । अत्र गुञ्जदिति पुनरुक्तदोषयुतं पूर्वविशेषणेनैव तादृशार्थप्रतीतेः । गुरु बृहत् धनुः तस्मिन् धृत; बद्धः प्रेमा येन तादृशः । विकचः स्फुटः विकरालः अतिविशालः उल्बणः अत्युद्धतः रसः वीररसः यस्य तथा भूतः । अत्र पूर्वार्धे रत्याख्यः स्थायी भावः प्रसादो गुणः कैशिकी रीतिः । उत्तरार्धे वीरो रसः ओजोगुणः आरभटी रितिः मिश्रितो रस इति पूर्वमुक्तं ॥ २६ ॥

(क) चन्द्रकेतुः । ( अवतरन् ) आर्य सावित्रश्चन्द्रकेतुरभिवादयते ।

(ख) सुमन्त्रः । अजितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः ।
श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥ २७ ॥

अपिच ।

(ग) देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रं वैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २८ ॥

(घ) लवः । कुमार अति हि नाम शोभसे रथस्थ एव । कृतं कृत-मत्यादरेण ।

---

(क) सावित्रः सवितुरपत्यं चन्द्रकेतुः । चन्द्रकेतुरिति स्वनामग्रहणस्य अभिवादन 'नामग्राहमभिवादयेत्' इति स्मृत्या विहितत्वात् ॥

(ख) अजितमिति । शाश्वतः नित्यः वराहः सूकररूपेणावतीर्णः देवः द्योतमानः लक्ष्मीनारायणः श्रेयसे । तादर्थ्ये चतुर्थी । तन्नामार्थे अजितं अन्यैः अनभिभवनीयं पुण्यं पवित्रं ऊर्जस्वि अत्यूर्जितं महः अतिप्रसिद्धस्य राज्ञः इव ते तव परिकल्पतां विधत्तां । आदिदैत्याऽऽदिवराहयोर्युद्धस्याऽऽदित्वेन तत्र च वराहेण जयलाभात् तत्प्रार्थना युक्तैवेति भावः॥ 'क्लृपि सम्पद्यमाने च' इति श्रेयसे इत्यत्र-चतुर्थीति कश्चित् तत्तु असङ्गतं । भक्तिर्ज्ञानाय कल्पते इत्यत्र भक्तेर्ज्ञानरूपताऽऽपत्या ज्ञानस्य सम्पद्यमानत्वेन तत्र चतुर्थ्याः युक्तत्वेऽपि अत्र वराहस्य श्रेयो रूपताऽऽपत्यभावादित्यलं स्वस्य दोषज्ञत्वाऽऽविष्करणेन ॥ २७ ॥

(ग) देव इति । यः ते गोत्रस्य वंशस्य पिता आदिपुरुषः स सविता सूर्यः देवः त्वां धिनोतु प्रीणयतु । 'धिवि' प्रीणने इति धातोः 'लट्' 'इदितो नुम् धातोः' इति 'नुम्' । 'धिन्विकृण्व्योरच' इति अकारोन्ताऽऽदेशः 'उ'प्रत्ययः । 'अतो लोपः' 'उ'-प्रत्ययस्य 'तिप्'निमित्तो गुणः । यः ते गुरूणां रामाऽऽदीनामपि गुरुः सः मैत्रावरुणः वशिष्ठः त्वां अभिनन्दतु । अत्र मैत्रावरुणिरिति युक्तं । 'अत इञ्' इञो विहितत्वात् । ऐन्द्रं इन्द्रस्य इदं । वारुणं वरुणस्य इदं । आग्निमारुतं अग्नामरुतोः इदं । 'देवता द्वन्द्वे च' इति उभयपदवृद्धिः । 'इद् वृद्धौ' इति अग्नेरिदादेशः । अथो मङ्गले कार्त्स्न्ये वा । सौपर्णं सुपर्णस्य गरुडस्य इदं ओजः सामर्थ्यं अस्तु । रामेति रामलक्ष्मणयोः धनुषः ज्यायाः मौर्व्याः घोषः स एव मन्त्रः । ते जयं देयात् एव । चो निरर्थकः ॥ २८ ॥

(घ) कृतं कृतं अलं अलं ॥

चन्द्रकेतुः । तर्हि महाभागोप्यन्यं रथमलंकरोतु ।

लवः । आर्य प्रत्यारोपय रथोपरि राजपुत्रम् ।

सुमन्त्रः । त्वमप्यनुरुध्यस्व वत्सस्य चन्द्रकेतोर्वचनम् ।

(क) लवः । को विचारः स्वेषूपकरणेषु । किन्त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

(ख) सुमन्त्रः । जानासि वत्स दर्पसौजन्ययोर्यथोचितमाचरितुम् । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा तस्य स्नेहेन हृदयमभिष्यन्देत ।

लवः । आर्य सुजनः स राजर्षिः श्रूयते । ( सलज्जमिव )

(ग) **वयमपि न खल्वेवंप्रायाः क्रतुष्वपिमत्सराः**
**क इह च गुणैस्तं राजानं न वा बहु मन्यते ।**
**तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां**
**विकृतिमखिलक्षत्राऽऽक्षेपप्रचण्डतयाऽकरोत् ॥ २९ ॥**

(घ) चन्द्रकेतुः । ( सस्मितम् ) किन्तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ।

(ङ) लवः । अस्त्विहामर्षो मा वा । एतत्तु पृच्छामि दान्तं हि राजानं राघवं श्रुणुमः स किल नात्मना दृप्यति नास्य प्रजा वा दृप्ता जायन्ते तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।

---

(क) उपकरणेषु रथादिषु विचारः विवेकः । स्वीयं परकीयमिति विवेकः । अरण्यसदः वनवासिनः अनभ्यस्ता अशिक्षिता रथचर्या रथव्यवहारः यैः तादृशाः ॥

(ख) यथोचितं अनुरूपं अभिष्यन्देत द्रुतं भवेत् ॥

(ग) **वयमपीति** । यथा भवान् अस्मान् विप्रकर्तृन् आश्वमेधिकाश्वहरणेन मन्यते एवंप्रायाः एवं प्रायो बहुलं कृतिः येषां एतादृशाः वयमपि न खलु स्मः । इह अस्मिन् जगति गुणैः शौर्यौदार्यसौजन्याऽऽदिभिः तं राजानं को वा न बहुमन्यते नाऽऽद्रियते । न वय क्रतुद्वेषिणा न वा रामद्वेषिणः । तदपि तथापि खलु तुरङ्गमरक्षिणां अश्वरक्षकाणां स व्याहारः अयमश्वः पताकेयमित्याद्युक्तिः । अखिलानां क्षत्राणां क्षत्रियाणां आक्षेपेण निन्दया प्रचण्डतया दुःसहत्वेन मे विकृतिं विकारं अकरोत् । अनेन श्लोकेन अस्मिन् सौजन्यं दर्पश्च आविष्कृतः ॥ २९ ॥

(घ) अमर्षः असहिष्णुता ॥

(ङ) दान्तं बाह्येन्द्रियदमनशीलं तस्य मनुष्याः भृत्याः । सेनाजयो राज्ञि इव भृत्यापचारोऽपि राज्ञि फलतीति भावः ॥

(क) ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥ ३० ॥

(ख) इति ह स्म तां निन्दन्ति । अथेतरामभिष्टुवन्ति ।

(ग) कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ३१ ॥

(घ) सुमन्त्रः । परिपूतस्वभावोऽयं कुमारः प्राचेतसान्तेवासी वदत्ययमभिसंपन्नमार्षेण संस्कारेण ।

(ङ) लवः । यत पुनश्चन्द्रकेतो वदसि किन्तु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयाः क्षत्रधर्मा इति ।

(च) सुमन्त्रः । नैव खलु जानासि देवमैक्ष्वाकम् । तद्विरम विरमातिप्रसङ्गात् ।

(छ) सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने नातिनिर्वक्तुमर्हसि ॥ ३२ ॥

---

(क) ऋषय इति । योनिः कारणम् । निर्ऋतिः अलक्ष्मीः ॥ ३० ॥

(ख) इति ह स्मेति प्रसिद्धौ । तां राक्षसीं वाचं ॥

(ग) कामानिति । दुग्धे प्रपूरयति । विप्रकर्षति निराकरोति । मंगलानां कल्याणानां मातरं जनिकां धेनुं कामधेनुं ॥ ३१ ॥

(घ) ऋषीणां अयं आर्षः तादृशेन संस्कारेण अभिसंपन्नं यथा तथा वदति ॥

(ङ) क्षत्राणां क्षत्रियाणां धर्माः अमर्षादयः व्यवस्थितविषयाः व्यवस्थितः नियमितः विषयः येषां तथाभूताः । अस्मिन् अमर्षः कार्यः अत्र नेति व्यवस्था कर्तुं अशक्येति भावः

(च) अतिप्रसंगात् रघुपतावपि सावज्ञं अमर्षातिरेकात् ॥

(छ) सैनिकानामिति । ओजायितं ओजस्वीव आचरितं । ओजःशब्दो वृत्तिविषये तद्वति । ततः 'कर्तुः क्यङ् सलोपश्च' इति 'क्यङ्' सलोपश्च । 'अकृत्सार्व'–ति दीर्घः । ततः 'क्तः' । दमने जेतरि अतिनिर्वक्तुं औद्धत्येन वक्तुम् ॥ ३२ ॥

(क) लवः । ( सहासम् ) आर्य जामदग्न्यस्यापि दमनः स राजेति कोऽयमुच्चैर्वादः ।

(ख) सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
502 बाह्वोर्वीर्यं यत्तु तत् क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन् दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३३ ॥

(ग) चन्द्रकेतुः । ( सोन्मादमिव ) आर्य आर्य कृतमुत्तरोत्तरेण

(घ) कोऽप्येष संप्रति नवः पुरुषावतारो
210 वीरो न यस्य भगवान् भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितानि च यो न वेद ॥ ३४ ॥

(ङ) लवः । को हि रघुपतेश्चरितं महिमानं च न जानाति । यदि नाम किंचिद्वक्तव्यमस्ति । अथवा शान्तम्

---

(क) उच्चैर्वादः महावीरत्वद्योतकः प्रवादः । नहि ब्राह्मणजयेन क्षत्रियैर्महत्वं लभ्यत इति भावः ॥

(ख) तदेवाह—**सिद्धमिति** । सिद्धं हि सर्वजनप्रसिद्धमेव । ब्राह्मणपदं शस्त्रव्यवहारे अकौशल्यं व्यनक्ति ॥ ३३ ॥

(ग) सोन्मादमिव । लवेन संलापे सुमंत्रं प्रति आर्येत्यामंत्रणं उन्मादव्यंजकं । रामाधिक्षेपश्रवणेन किमपि विवक्षन्तं सुमंत्रं निवारयति आर्येति । उत्तरोत्तरेण उत्तरात् अनंतरं उत्तरदानेन । कृतं अलं ॥

(घ) **क इति** । पर्याप्तेति पर्याप्ता संपन्ना सप्तानां भुवनानां अभयदानदक्षिणा येभ्यः तानि । रावणादिसकलराक्षसवधेनेति भावः । न वेद न जानाति । वेत्ते–'लॅटि' रूपं ॥ ३४ ॥

(ङ) अथवा शान्तम् । न किञ्चित् वक्तुमुचितमिति भावः ॥

(क) वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोभयान्यपि पदान्यासन् खराऽऽयोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३५ ॥

(ख) चन्द्रकेतुः । आः तातापवादभिन्नमर्याद अति हि नाम प्रगल्भसे ।

लवः । अये मय्येव भ्रुकुटीधरः संवृत्तः ।

(ग) सुमन्त्रः । स्फुरितमनयोः क्रोधेन । तथाहि

(घ) चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः
किञ्चित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।

---

(क) वृद्धा इति । ते प्रसिद्धाः वृद्धाः रामादयः विचारणीयचरिताः विचारणीयं सदसद्वेति विचारयितुं योग्यं चरितं येषां तादृशाः न भवन्ति । तेषां कथमपि चरितमस्तु नास्मादृशैः बालैः तद्विचारयितुं योग्यमिति भावः । तिष्ठंतु किं वर्ण्यते । तेषां वर्णनमपि नास्माभिः कर्तुं योग्यं । हि यतः सुंदस्त्रीदमनेऽपि सुंदस्य तदाख्यदैत्यस्य स्त्रियाः ताडकायाः दमनेऽपि निधने कृतेऽपि न खण्डं कुण्ठं क्षीणं वा यशः येषां तथाभूताः । हि यतः लोके ते महान्तः सन्ति । क्षत्रियाणां हि स्त्रीवधेन यशः क्षीयते तेषां तु वर्धते । अतः ते महान्त एव नच कश्चित् तान् अपवदति इति अहो तेषां महत्त्वमिति भावः । खराऽऽयोधने खरेण सह युद्धे यानि अकुतोभयानि न विद्यते कुतश्चिदपि भयं येषां तानि त्रीणि पदानि आसन् । न हि पलायितस्य कुतश्चिदपि भयमस्तीति भावः । पश्चात् परावृत्तानि पदानि अकुतोभयानि उच्यन्ते । तथा च आर्षे रामायणे 'तमापतन्तं संक्रुद्धं कृतास्त्रो रुधिरप्लुतं । अपासर्पद्द्विपदं किंचित्त्वरितविक्रमः' इति । इंद्रसूनोः वालिनः निधने वधे यत् कौशलं प्रच्छन्नं वृक्षखंडे तिरोभूय शरक्षेपरूपं । तत्रापि सर्वो जनः अभिज्ञः । सर्वजनप्रसिद्धं तदिति नास्मत्तो वर्णनामर्हतीति भावः ॥ ३५ ॥

(ख) तातेति । तातस्य रामस्य अपवादेन निन्दायुक्तवचनेन भिन्ना उल्लंघिता मर्यादा सतामाचारो येन तत्संबोधनं । प्रगल्भसे धाष्ट्येन वदसि ॥

(ग) स्फुरितं प्रदीप्तं । 'नपुंसके भावे क्तः' ।

(घ) चूडेति । आकूतजः आकूतं शत्रुदमनविषयोऽभिप्रायः तस्माज्जातः । शत्रुविषयकोपजन्यः वेपथुः कम्पः । चूडामंडलस्य शिखासमूहस्य कुन्तलेति पाठे

धत्ते कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्त्रं भ्रुवो-
श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥३६॥

(क) **कुमारौ** । तदितो विमर्दक्षमां भूमिमवतरावः ।

( निष्क्रान्ताः सर्वे )

कुमारविक्रमो नाम

पञ्चमोऽङ्कः ।

---

शिखाकेशानामिति व्याख्येयं । बन्धनं तरलयति चालयति । सशिखं कम्पत इति भावः । कोकनदच्छदस्य रक्तोत्पलदलस्य किञ्चित्सदृशे स्वयं स्वभावत एव रक्ते क्रोधाऽऽवेशेन रज्यतः रक्ते भवतः । 'रञ्ज' रागे 'अनिदिता-मिति 'न'लोपः । अकाण्डे अनवसरे ताण्डवितयोः सञ्जातताण्डवयोः नृत्यतोरिव प्रचलितयोः भ्रुवोः भङ्गेन चलनेन उत्कटलाञ्छनस्य कठोरकलङ्कस्य चन्द्रस्य । उत् ऊर्ध्वं भ्रान्ता भृङ्गा यस्मिन् तथाभूतस्य कमलस्य पद्मस्य च लक्ष्मीं धत्ते धारयति । निदर्शनाऽलङ्कारः ॥ ३६ ॥

(क) विमर्दक्षमां युद्धयोग्यां ॥

इति भावप्रभूतार्थबोधिकायां पञ्चमोऽङ्कः ॥

---

## षष्ठोऽङ्कः ।

(क) (ततः प्रविशति विमानेनोज्ज्वलनेन विद्याधरमिथुनम् )

(ख) विद्याधरः । अहो नु खलु भो अनयोर्विकर्तनकुलकुमारयोरकाण्डकलहकरणप्रचण्डयोरुद्योतितक्षात्त्रलक्ष्मीकान्यत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तविचरणानि । तथाहि प्रिये पश्य पश्य

(ग) झणज्झणितिकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरु गुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
र्विचित्रमभिवर्द्धते भुवनभीममायोधनम् ॥ १ ॥

(घ) विजृम्भितं च दिव्यस्य मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्द्रं दुन्दुभेर्दुन्दुमायितम् ॥ २ ॥

---

(क) युद्धादेरभिनेयत्वेन दृश्यत्वासंभवात् सूच्यत्वं अभिप्रत्य कुमारयोर्युद्धं विष्कम्भकेनाह—तत इति ॥

(ख) विकर्तनः सूर्यः । अकाण्डे अनवसरे कलहः विरोधः तस्य करणेन प्रचण्डयोः भीमयोः । उद्योतिता उद्दीपिता क्षात्त्रलक्ष्मीः येषु तानि । अत्यद्भुतेन विस्मयातिशयेन उद्भ्रान्ताः विमूढाः देवाः असुराश्च येषु तानि । विक्रान्तानि विक्रमदर्शकानि विचरणानि चरितानि ॥

(ग) झणदिति । झणज्झणिति झणत् झणत् इति 'अव्यक्तानुकरणस्यात इतौ' इति पररूपं । यत् कङ्कणस्य क्वणितं शब्दः तद्वत् क्वणितं यासां ताः किङ्किण्यः क्षुद्रघण्टिकाः यस्मिन तत् । उष्ट्रमुखवत समासः । गुरु उत्कट यथा तथा ध्वनत् शब्दं कुर्वत् । ध्वनत् इति पृथक् पदं । यद्वा ध्वनदित्यादि एकं पदं ध्वनंत्यः गुर्व्यः गुणः मौर्वी अटन्यौ धनुषः कोट्यौ ताभिः कृतः करालः कोलाहलः यस्मिन् तथा भूतं । धनुः वितत्य विस्फार्य । शरान् बाणान् किरतोः प्रक्षिपतोः । अविरतं निरंतरं स्फुरन्त्यः प्रचलन्त्यः चूडाः ययोः तयोः कुमारयोः । भुवनेषु भीमं भयङ्करं विचित्रं अद्भुतं आयोधनं युद्धं अभिवर्तते । 'मौर्वी ज्या सिञ्जनी गुणः' । 'कोटिरस्याटनी गोधे'—त्यमरः ॥ १ ॥

(घ) विजृम्भितमिति । द्वयोरपि अनयोः मङ्गलाय स्तनयित्नोः मेघस्य इव दिव्यस्य स्वर्गीयस्य दुन्दुभेः वाद्यविशेषस्य दुन्दुमायितं दुम् दुम्—इत्याकारकं क्वणितं विजृम्भितं च । पूर्वश्लोकस्थक्रियायां समुच्चायकश्चकारः ॥ २ ॥

(क) तत्प्रवर्त्यतामनयोः प्रवीरयोरनवरतमविरलललितविकचकनककमलकमनीयसंहतिरमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः।

(ख) **विद्याधरी** । ता किं त्ति उण अआण्डविप्फुरिदतडिच्छडाकडारं विअ अम्बरं झत्ति संवुत्तं । (१)

**विद्याधरः** । तत् किन्नु खल्वद्य ।

(ग) **त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः ।**
**पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥**

(घ) (विचिन्त्य) आं ज्ञातं वत्सेन चन्द्रकेतुना प्रयुक्तमस्त्रमाग्नेयम् । तस्यायमग्निच्छटासम्पातः संप्रति हि ।

(ङ) **अवदग्धकर्बुरितकेतुचामरै-**
**रपयातमेव हि विमानमण्डलैः ।**

---

(१) तत्किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिवाम्बरं झटिति संवृत्तम् ।

---

(क) अविरलेति अविरलैः घनैः ललितैः सुन्दरैः विकचैः स्फुटैः कनकमयैः कमलैः कमनीया सुन्दरा संहतिः समुदायः यस्य तादृशः अमरतरूणां पारिजाताऽऽदीनां तरुणस्य नवस्य मणिसदृशस्य मुकुलनिकरस्य कुड्मलसमूहस्य मकरन्देन रसेन सुन्दरः पुष्पनिपातः । तत् ततो हेतोः प्रवर्त्यताम् ॥

(ख) अकाण्डे सहसा विस्फुरितया तडितां विद्युतां छटया समूहेन कडारं पिङ्गलं । 'कडारः कपिलः पिङ्गः'-इत्यमरः ॥

(ग) **त्वाष्ट्रेति** । अस्मिन् श्लोके पूर्वस्थं किन्नुखल्वद्येति योज्यं । अद्य तत् ललाटस्थं नीललोहितस्य शंकरस्य यत् तृतीयं चक्षुः तस्य । पुटयोः पक्ष्मणोः भेदः उन्मीलनं किन्नु खलु । इत्युत्प्रेक्षा । पुटभेदं विशिनष्टि- त्वाष्ट्रेति त्वष्टुः विश्वकर्मणः इदं त्वाष्ट्रं यत् यन्त्रं शाणःतस्य भ्रमिः तत्र भ्रांतस्य भ्रमिप्रापितस्य मार्तण्डस्य ज्योतिरिव उज्ज्वलः । सूर्यस्त्वष्ट्रा भ्रम्यां आरोप्य उज्ज्वलीकृत इति पुराणप्रसिद्धम् ॥ ३ ॥

(घ) अग्निच्छटासंपातः अग्निसमूहपतनम् ।

(ङ) **अवदग्धेति** अवदग्धानि किंचिद्दग्धानि अत एव कर्बुरितानि चित्रवर्णानि दाहेन कृष्णस्य धूमेन रक्तस्य स्वतः श्वेतस्य च वर्णस्य सत्वेन चित्रत्वं । केतवः चामराणि च येषां तैः । विमानमण्डलैः विमानसमूहैः अपयातमेव गतमेव । 'नपुंसके भावे क्तः' स च सकर्मकेभ्योऽपि । भ्रान्तं देशमित्यादिवत् । ध्वजांशुकेषु

वधति ध्वजांशुकपटाञ्चलेष्विमाः
क्षणकुंकुमच्छुरणविभ्रमं शिखाः ॥ ४ ॥

(क) आश्चर्यं प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुतरस्फुलिङ्ग-विकृतिरुत्तालतुमुललेलिहानज्वालासंभारभैरवो भगवानुषर्बुधः । प्रचण्ड-श्चास्य सर्वतः सन्तापः । तत्प्रियामङ्केनाच्छाद्य दूरमपसरामि । (तथा करोति) ।

(ख) विद्याधरी । दिट्ठिआ एदेण विमलमोत्तिअसरसीदलमसिणमंसलेण णाहदेहप्फंसेण आणन्दमन्दमुउलिदघुण्णन्तलोअणाए अन्तरिदो मे सन्दावो । (१)

विद्याधरः । अयि किमत्र मया कृतम् । अथवा

(ग) अ किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

---

(१) दिष्ट्यैतेन विमलमौक्तिकसरशीतलमसृणमांसलेन नाथदेहस्पर्शेनाऽऽनन्दमन्दमुकुलितघूर्णमानलोचनाया अन्तरितो मे सन्तापः ।

---

ध्वजसंबंधिषु वस्त्रेषु पटांचलेषु चीरवृतवस्त्रप्रान्तेषु च इमाः शिखाः अग्निज्वालाः क्षणं कुंकुमस्य केशरस्य छुरणं संपर्कः तस्य विभ्रमं शोभां दधति धारयंति । निदर्शनालंकारः ॥ ४ ॥

(क) उच्चंडः अतिभीषणः वज्रखण्डस्य यः अवस्फोटः आविर्भावः तद्वत् पटुतरः अतिपटुः स्फुलिंग एव विकृतिः विकारो यस्य सः । उत्तालेन अत्युन्नतेन तुमुलेन अतिसंकुलेन लेलिहानेन सर्वतः प्रसरता 'लिह्'धातोः आदादिकात् यङंतात् 'शानच्'। ज्वालानां संभारेण समूहेन भैरवः भयंकरः भगवान् उषर्बुधः उषसि बुध्यते इति उषर्बुधः अग्निः । आहिताग्नयो हि अग्निं उषसि प्रादुष्कुर्वन्ति । 'अहरादीनां पत्यादिषु वा रेफः' इति रेफः ।

(ख) विमलानां मौक्तिकानां सर इव हार इव शीतलः मसृणः स्निग्धः मांसलः पुष्टः तेन नाथदेहस्पर्शेन प्रियस्य देहस्पर्शेन । आनन्देन मन्दं ईषत् मुकुलिते घूर्णमाने लोचने यस्याः तस्याः । मे मम । सन्तापः अन्तरितः व्यवहितः दूरीकृतः । अन्तरा व्यवधानं तत् सञ्जातं यस्य इति तारकाऽऽदित्वात् 'इतच्' ॥

(ग) अकिञ्चिदपीति । अ इति भिन्नं पदं । किञ्चिदपि अ कुर्वाणः । 'अमानोनाः प्रतिषेधे' इति गणरत्नकारः । जनः स्वसन्निधिसौख्यैः दुःखानि संबन्धिनः तापा-

(क) **विद्याधरी** । कहमविरलविलोलघुण्णन्तविज्जुल्लदाविलासमण्डिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णहत्थलं जलहरेहिं । (१)

**विद्याधरः** । हन्त हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वयम् । कथमविरलप्रमुक्तवारिधारासहस्रसंपातैः प्रशान्तं पावकास्त्रम् ।

(ख) **विद्याधरी** । पिअं मे पिअं मे । (२)

(ग) **विद्याधरः** । हन्त हन्त भोः सर्वमतिमात्रं दोषाय यत् प्रबलवातावलिक्षोभगम्भीरगुमगुमायमानमेघमेदुरान्धकारनीरन्ध्रनिबद्धमेकवारविश्वग्रसनविकचविकरालकालकण्ठमुखकन्दरविवर्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते । साधु वत्स चन्द्रकेतो साधु स्थाने वायव्यास्त्रमीरितम् । यतः

---

(१) कथमविरलविलोलघूर्णमानविद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरास्तीर्यते नभस्तलं जलधरैः ।

(२) प्रियं मे प्रियं मे ।

---

ऽऽर्तीनि अपोहति दूरीकरोति । हि यतः यः यस्य प्रियः जनः तत् तस्य किमपि निर्हेतुप्रेमाऽऽस्पदं द्रव्यं धनवत् रक्षणीयं वस्तु ॥ ५ ॥

(क) अविरलेति अविरलं घनं विलोलं चञ्चलं यथा तथा घूर्णमानाः याः विद्युल्लताः तासां विलासैः स्फुरणैः मण्डितैः अलंकृतैः । मत्तमयूरकण्ठश्यामलैः मयूरे मोर इति देशी । मत्ताः ये मयूराः तेषां कण्ठा इव श्यामलाः तैः जलधरैः मेघैः । नभस्तलं अधाऽऽस्तीर्यते आच्छाद्यते ॥

(ख) अविरलं निरन्तरं प्रमुक्ताः याः वारिधाराः तासां सहस्रं तस्य संपातैः आसारैः ॥

(ग) अतिमात्रं अतिशयितं । प्रमाणे 'मात्रच्' । प्रबलेति प्रबला अतिशयिता या वाताऽऽवलिः वात्या तस्याः क्षोभेण गम्भीरं यथा तथा गुमगुमायमानाः गुमगुमेतिगर्जन्तः डाजन्तात् 'क्यच्' तदन्तात् 'शानच्' । ये मेघाः तैः मेदुरः सान्द्रः यः अन्धकारः तेन नीरन्ध्रं निरवकाशं यथा तथा नीरन्ध्रेत्यत्र 'ढ्रलोपे'–इति दीर्घः । निबद्धं निरुद्धं । एकवारं एकस्मिन् एव काले विश्वस्य ग्रसनाय विकचः स्फुटः विकरालः अतिभैरवः कालकण्ठस्य नीलकण्ठस्य मुखं तदेव कन्दरं दरी 'दरी तु कन्दरो वा स्त्री'–इत्यमरः । तत्र वर्तमानं विचेष्टमानं । युगान्ते प्रलये योगनिद्रया निरुद्धानि सर्वद्वाराणि मुखाऽऽदीनि येन तस्य नारायणस्य उदरं निविष्टमिव । ततो निर्गमाभावे दृष्टान्तद्वयं । भूतजातं प्राणिसमूहः प्रवेपते ॥ स्थाने युक्तं । 'युक्ते द्वे सांप्रतं स्थाने'–इत्यमरः ॥

(क) विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि विप्रलयः कृतः ॥ ६ ॥

(ख) विद्याधरी । णाह को दाणीं एसो ससम्भमुक्खित्तकरब्भमिदपट्टकञ्चलो दूरदो ज्जेव महुरवअणपडिसिद्धजुज्झवावारो एदाणं कुमाराणं अन्तरम्मि विमाणवरं ओदरावेदि । (१)

विद्याधरः । (दृष्ट्वा) एष शम्बूकवधात् प्रतिनिवृत्तो रघुपतिः ।

(ग) शाब्दं महापुरुषसंविहितं निशम्य
तद्गौरवात् समुपसंहृतसंप्रहारः ।

---

(१) नाथ क इदानीमेष ससंभ्रममुत्क्षिप्तकरभ्रमितपट्टकाञ्चलो दूरत एव मधुरवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरमवतारयति ।

---

(क) विद्याकल्पेनेति । विद्याकल्पेन विद्यायाः ईषन्न्यूनेन ब्रह्मज्ञानसदृशेन । 'उपमायां कल्पबादय' इति दण्डी । मरुता वायुना । भूयसां अपि बहूनामपि मेघानां विवर्तानां जगद्भ्रमाणां भ्रमभूतानां जगतां ब्रह्मणि इव क्वापि विप्रलयः अत्यन्ताभावः कृतः संपादितः । श्लेषेणार्थान्तरमपि सूच्यते । विद्याकल्पेन ब्रह्मज्ञानादीषन्न्यूनेन अभ्यासवशीकृतेन मरुता प्राणाऽऽख्येन वायुना भूयसामपि मे मत्संबंधिनां अघानां पापानां दुःखानां व्यसनानां वा विवर्तानां ब्रह्मणीव क्वापि विप्रलयः अत्यन्ताभावः कृतः इति । कविः स्वस्य औपनिषदपातञ्जलशास्त्रज्ञत्वं सूचयति । अनेन रामदर्शनजनिता अनन्तरवक्ष्यमाणा कुमारयोर्युद्धादिसर्वदुःखनिवृत्तिः सूच्यते ॥ ६ ॥

(ख) तदेव विद्याधरीमुखेनावतारयति—नाथेति । ससम्भ्रमं सत्वरं । बालयुद्धस्य अनिष्टपर्यवसायित्वशङ्कया त्वरा । उत्क्षिप्तः ऊर्ध्वं क्षिप्तः करेण भ्रमितः पट्टकाञ्चलः राजवस्त्रप्रान्तः येन सः । युद्धप्रसङ्गे तन्निवारणार्थं पट्टकाञ्चलः भ्राम्यते इति वीररीतिः । मधुरवचनैः प्रतिषिद्धः निषिद्धः युद्धव्यापारः येन सः ॥

(ग) शाब्दमिति । महापुरुषेण महाप्रभाववता रामेण संविहितं सम्यगुच्चारितं । अत्र अभिहितमित्यनुक्त्वा संविहितमित्युक्त्या तस्य विधिरूपता तेन अवश्यकरणीयता तदकरणे प्रत्यवायश्च सूच्यते । शाब्दं इत्यनेन तस्य वेदरूपत्वं व्यज्यते । बालाभ्यां युद्धात् विरम्यतां इति शाब्दं निशम्य श्रुत्वा तस्य गौरवात् गुरुत्वाद्धेतोः । सम्यक् उपसंहृतः सम्प्रहारः युद्धं येन सः लवः शान्तः सन् । एतेन लवस्य अतिविनयता व्यज्यते । प्रणत एव । न तु युद्धोद्यत इति भावः । चन्द्रकेतुश्च । चकारात् शान्तः प्रणतश्चेति अनुषज्यते । एवं

शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसंमिलनेन राज्ञः ॥ ७ ॥

तदितस्तावन्निर्गच्छावः ।

( इति निष्क्रान्तौ )

(क) विष्कम्भकः ।

(ख) ( ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च )

रामः । ( पुष्पकादवतरन् )

(ग) **दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥**

चन्द्रकेतुः । अभिवादये ।

रामः । ( उत्थाप्य सस्नेहास्रं परिष्वज्य ) अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य ।

(घ) चन्द्रकेतुः । कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभा-

---

सुतयोः सम्मिलनेन सङ्गमेन सङ्गतिकरणेन युद्धात् विरम्य स्नेहकरणेन राज्ञः रामस्य कल्याणमस्तु इति विद्याधराऽऽशीः । शान्तोऽयं रसः ॥ ७ ॥

(क) विष्कम्भकः । अयं मिश्रः संस्कृतप्राकृताभ्यां [illegible]त्वात् ॥

(ख) प्रणतः । प्रणत इति मध्यमणिन्यायेन उभयान्वयि ॥

(ग) **दिनेति** । दिनकरस्य सूर्यस्य कुले चन्द्रः तत्संबोधनं । इयं विभावना । चन्द्रकेतो । अयं लाटाऽनुप्रासः । सरभसं सत्वरं एहि । दृढं परिष्वजस्व आलिङ्ग । तुहिनस्य हिमस्य शकलैरिव खण्डैः इव शीतलैः तव अङ्गैः । इयं उपमा । ममापि चित्तदाहः शमं उपयातु । प्रसिद्धचन्द्रस्य शरीरदाहशामकत्वेऽपि चित्तदाहाशामकत्वात् प्रसिद्धचन्द्रात् व्यतिरेकः । तव तु युद्धे जयो भवन्नवेति चित्तदाहः शान्त एव ममापि शाम्यतु इति अपेः अर्थः ॥ ८ ॥

(घ) प्रतिवीरप्रयुक्तदिव्यास्त्राणां धरः देहः यस्य तस्य । तव कुशलं । इति प्रश्नः । प्रतिवीरप्रयुक्तदिव्यास्त्रैस्तव जयिनस्य दुःशकत्वादिति भावः ॥

(घ) अत्यद्भुतक्रियस्य एकेन बहुभिः सह युद्धकरणात् अत्यद्भुता क्रिया युद्धव्यापा

भ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण वा मत्तः शिवेन चक्षुषा पश्यत्वमुं महावीरप्रकाण्डं तातः।

(क) रामः। (लवं निरूप्य) दिष्ट्यातिगम्भीराऽऽकृतिरयं वयस्यो वत्सस्य।

(ख) त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै।
सामर्थ्यानामिव समुदयः संचयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः॥ ९॥

(ग) लवः। अहो पुण्यानुभावदर्शनोऽयं महापुरुषः।

(घ) आश्वासस्नेहभक्तीनामेकमालम्बनं महत्।
प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसंचरः॥ १०॥

---

रः यस्य तस्य। भवद्दर्शनमात्रेण युद्धानुपरतिरूपा वा अत्यद्भुता क्रिया यस्येति। अतएव प्रियदर्शनस्य लवस्य तदाख्यस्य। श्लेषेण भवत्सुतत्वात् भवदंशस्य लाभरूपेण अस्माकं अभ्युदयेन भाग्यसम्पदा। एतेन अप्रतिष्ठे कुलज्येष्ठे इति शङ्का समाहिता। मामिव। अस्य मद्वयस्यत्वात्। मत्तः विशेषेण वा। मयि भ्रातृपुत्रत्वेन सुतसामान्यात् अस्मिन् स्वपुत्रत्वेन विशेषात् शिवेन चक्षुषा। ननु मयि युद्धव्यापारकरणात् क्रूरेण। अमुं महावीरप्रकाण्डं प्रशस्तः महावीरः महावीरप्रकाण्डं। 'प्रशंसावचनैश्च' इति समासः। अत एव महावीरशब्दस्य उपसर्जनत्वात् पूर्वनिपातः। इदं नपुंसकं अजहल्लिङ्गं अमुमित्यस्य विशेषणं। 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि' इत्यमरः॥

(क) अतिगम्भीराऽऽकृतिः अतिगम्भीरा आकृतिः यस्य। मुखाऽऽदिदर्शनलिङ्गेन मनोगताभिप्रायस्य उन्नेतुमशक्यत्वेन आकुलाः गम्भीरत्वं॥

(ख) त्रातुमिति। लोकान त्रातुं। अस्त्रवेदः धनुर्वेदः कायवान् मूर्तिधरः परिणतः इव। अत्र तु फलोत्प्रेक्षा वस्तूत्प्रेक्षा च। ब्रह्मकोशस्य वेदसमूहस्य ब्राह्मणस्य। गुप्त्यै रक्षणाय क्षात्रः धर्मः तनुं श्रित इव। सामर्थ्यानां वीरधर्माणां समुदयः समुदायः इव। गुणानां सञ्चय इव वा। वाशब्द उत्प्रेक्षायै। जगत्पुण्यनिर्माणराशिः जगतां पुण्यानि तान्येव निर्माणानि निर्मीयन्ते तानि निर्माणानि पदार्थाः तेषां राशिः पुञ्जः। सर्वजगतां पुण्यानि एकीभूय तद्रूपेणाऽऽविर्भूतानीति भावः॥ ९॥

(ग) पुण्ये पवित्रे अनुभावः प्रतापः दर्शनञ्च यस्य॥

(घ) आश्वासेति। विषमानां आश्वासनं न्यूनेषु स्नेहः पूज्येषु भक्तिः तासां। एकं महत् आलम्बनं आश्रयः प्रकृष्टस्य धर्मस्य चतुष्पादैः सञ्चरतः धर्मस्य। मूर्त्या सकलेवरेण सञ्चरति यत्र इति। अधिकरणे 'घः'। अस्मिन् रामे धर्मो मूर्तिमान् सञ्चरतीति भावः। प्रसादः प्रसन्नरूपश्च॥ १०॥

आश्चर्यम्

(क) विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ॥
झटित्यस्मिन् दृष्टे किमिव परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥

(ख) रामः । तत् किमयमेकपद एव दुःखविश्रामं ददात्युपस्नेहयति च कुतोपि निमित्तादन्तरात्मानम् । अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् । तथाहि ।

(ग) व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाऽऽधीन् प्रीतयः संश्रयन्ते ।

---

(क) **विरोध इति** । अस्मिन् दृष्टे विरोधो विश्रान्तः निवृत्तः । एतेन वीर भावस्य शान्तिः । निर्वृतिघनः निर्वृत्या आनन्देन घनः अन्तर्बहिश्च आनन्दरूपः रसः प्रीतिः प्रसरति । अयं शांत्याख्यस्य भावस्य उदयः । औद्धत्यं दर्पः क्वापि व्रजति । एतद्दर्शनमात्रेण दर्पः क्वापि पलाय्य गत इति भावः । इयं भावशान्तिः । विनयः मां प्रह्वयति नम्रीकरोति । अत एव आश्चर्योर्विरोध इव वीरशान्तयो रसयोर्विरोधः सहानवस्थानलक्षणो विरोधः विश्रान्तः । किमिव कुतो हेतोः । परवान् अनेन नाथेन नाथवान् अस्मि । तत्र हेतुं न जाने । तीर्थानामिव महतां कोपि लोकोत्तरः अतिशयः महार्घः महामूल्यः । अलभ्यत्वं द्योत्यते । उपमागर्भार्थान्तरन्यासः अलङ्कारः । असंलक्ष्यक्रमव्यङ्ग्योऽयं ध्वनिः ॥ ११ ॥

(ख) एकपदे युगपदेव । इदं अव्ययं चाऽऽदिषु पठ्यते । दुःखविश्रामं दुःखस्य विश्रान्ति विश्राम इति अपाणिनीयं । 'नोदात्तोपदेशस्ये'—ति निषेधेन श्रमेः 'घञि' वृद्धेर्दुर्लभत्वात् विश्रम इति साधु । ददाति उपस्नेहयति च स्नेहवन्त करोति । कुतोपि निमित्तात् अनिर्ज्ञातात् कारणात् अन्तरात्मानं अन्तःकरणं । अथवा स्नेहश्च निमित्तसव्यपेक्षः कारणपरतन्त्र : इति विप्रतिषद्ध सहानवस्थितं । अयं भावः नहि स्नेहः कारणैर्जन्यते यः कारणैर्जन्यते स च न स्नेहः । नष्टे कारणे तस्यापि नाशप्रसङ्गात् । सकृद्भूत्वा यो नीलीरागवत् न नश्यति स स्नेह इति तथाहि । अमुमेवार्थं सम्पादयतीत्यर्थः ॥

(ग) तमेवाह—**व्यतिषजतीति** । आन्तरः अविदितकार्यकारणभाववान् कोपि अयमिति निर्देष्टुमशक्यः हेतुः कारणं पदार्थान् व्यतिषजति सम्पृक्तान् करोति । 'षञ्ज' सङ्गे । 'दंशसञ्जस्वञ्जां शपि' इति 'न'लोपः । 'उपसर्गात्सुनोती'—त्यादिना 'ष'त्वं । बहिरुपाऽऽधीन् बहिःस्थितान् उपाधीन् जन्यजनकभावदाम्पत्याऽऽदीन् प्रीतयः न श्रयन्ते आश्रयंते । स्वजनकत्वेनेतिशेषः । बहिरुपाधिभिः प्रीतयो न जन्यन्त

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥

(क) लवः । चन्द्रकेतो क एते ।

(ख) चन्द्रकेतुः । प्रियवयस्य ननु तातपादाः ।

(ग) लवः । ममापि तर्हि धर्मतस्तथैव यतः प्रियवयस्य इत्यात्थ । किन्तु चत्वारः खलु भवतामेवं व्यपदेशभाजस्तत्रभवन्तो रामायणकथापूरुषास्तद् विशेषं ब्रूहि ।

चन्द्रकेतुः । ननु ज्येष्ठतातपादा इत्यवेहि ।

(घ) लवः । (सोल्लासम्) कथं रघुनाथ एषः । दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः । (सविनयकौतुकं निर्वर्ण्य उपसृत्य) तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

(ङ) रामः । आयुष्मन् एह्येहि । (सस्नेहमाश्लिष्य) अयि वत्स कृतं कृतमतिविनयेन । अनेकवारमपरिश्लथं परिष्वजस्व माम् ।

(च) परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।
नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः ॥ १३ ॥

---

इत्यर्थः । तदेवविशेषेण सामान्यसमर्थनरूपेणार्थान्तरन्यासेन द्रढयति हि यतः पतङ्गस्य सूर्यस्य उदये । जाते सतीतिशेषः । पुण्डरीकं सिताम्भोजं विकसति । हिमरश्मौ चन्द्रे उत् ऊर्ध्वं गते प्राप्ते सति चन्द्रकान्तः तदाख्यो मणिः द्रवति । नात्र कश्चिद्बहिरुपाधिर्जन्यजनकभावादिर्दृश्यते । अत एव एतद्दारकदर्शनेन मच्चित्तकमलविकासः कठिनतरकृष्णपाषाणसदृशमच्चित्तद्रवश्च सङ्गच्छते ॥ १२ ॥

(क) क एते । बहुवचनप्रयोगोविनयत्वसूचकः ॥

(ख) तातपादाः । पादशब्दः पूजायाम् ॥

(ग) धर्मतः वयस्यधर्मतः । एवं व्यपदेशभाजः तातेति शब्दभागिनः । रामायणकथांपूरुषाः तत्कथाप्रवृत्तिबीजभूताः । 'अन्येषामपी'–ति दीर्घः । तद्विशेषं ब्रूहि विशेषनाम्ना व्यवहर ॥

(घ) सोल्लासं समनाक् स्मितम् ॥

(ङ) अपरिश्लथं अशिथिलं । गाढमिति यावत् ॥

(च) परिणतेति । परिणतं विकसितं अत एव कठोरं दृढं यत् पुष्करं कमलं तस्य गर्भच्छदमिव गर्भपत्रमिव पीनः स्थूलः मसृणः स्निग्धः सुकुमारः कोमलः । चन्द्रस्य

(क) लवः । (स्वगतम्) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया पुनरेभ्य एवाभिद्रुग्धमज्ञेन । यदायुधपरिग्रहं यावदध्यारूढो दुर्योगः । (प्रकाशम्) मृष्यन्त्विदानीं लवस्य बालिशतां तातपादाः ।

(ख) रामः । किमपराद्धं वत्सेन ।

(ग) चन्द्रकेतुः । अश्वानुयात्रिकेभ्यस्तातप्रतापाऽऽविष्करणमुपश्रुत्य वीरायितमनेन ।

रामः । नन्वयमलङ्कारः क्षत्रस्य ।

(घ) **न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते**
**स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।**
**मयूखैरश्रान्तं तपति यदि देवो दिनकरः**
**किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ १४ ॥**

(ङ) चन्द्रकेतुः । तात अमर्षोऽप्यस्यैव शोभते वीरस्य । पश्यतु हि तातः प्रियवयस्यविनियुक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि ।

(च) रामः । (विलोक्य) वत्स लव संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि सान्त्वय बलानि ।

---

कर्पूरस्य चन्दनस्य च यः निष्यन्दः द्रवः तद्वत् जडः शीतलः तव स्पर्शः । मां नन्दयति आह्लादयति ॥ १३ ॥

(क) मां प्रति । 'प्रति' योगे द्वितीया । एभ्य एव अभिद्रुग्धं । भावे 'निष्ठा' । अत्र एभ्य एवेति चतुर्थी चिन्त्या 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मसंज्ञाविधानात् । अपकृतमितिपाठेऽपि चतुर्थ्याः दौर्लभ्यं । आयुधपरिग्रहं यावत् आयुधपरिग्रहपर्यन्तं । दुर्योगः कलहः अध्यारूढः प्रवृत्तः । बालिशतां अविमृश्यकारिताम् ॥

(ख) अपराद्धं । भावे 'क्तः' ॥

(ग) वीरायितं वीरवत् आचरितम् ॥

(घ) **नेति** । तेजस्वी प्रसृतं सर्वतो व्याप्तं अपरेषां अन्येषां । अपरशब्दोऽन्यार्थे रूढः । तेजः न प्रसहते न मर्षयति । सः तस्य प्रकृतिनियतत्वात् स्वभावसिद्धत्वात् अकृतकः अकृत्रिमः स्वो भावः स्वभावः । यदि देवो दिनकरः अश्रान्तं अविश्रमं मयूखैः किरणैः तपति । आग्नेयो ग्रावा सूर्यकान्तमणिः । निकृतः इव पराभूत इव तेजांसि वमति अग्निमुद्वमति । किं कुतो हेतुः । स्वभावात् नान्यो हेतुरस्तीति भावः ॥ १४ ॥

(ङ) निष्कम्पं निश्चलं । स्तम्भितानि सञ्जातस्तम्भानि ॥

(च) निर्व्यापारविलक्षितानि निर्व्यापारं व्यापाररहितं अभूतभावेऽव्ययीभावः । तेन विलक्षितानि विस्मयान्वितानि । लज्जितानीति यावत् ॥

लवः । यथाऽऽज्ञापयति तातः । ( इति प्रणिधानं नाटयति ) ।

चन्द्रकेतुः । यथाऽऽदिष्टम् । ( इति निष्क्रान्तः )

लवः । प्रशान्तमस्त्रम् ।

(क) रामः । वत्स सरहस्यप्रयोगसंहरणान्यस्त्राण्याम्नायवन्ति ।

(ख) ब्रह्माऽऽदयो ब्रह्महिताय तप्त्वा
परः सहस्राः शरदस्तपांसि ।
एतान्यपश्यन् गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

(ग) अथैतन्मन्त्रपारायणोपनिषदं भगवान् कृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय विश्वामित्राय प्रोवाच स तु भगवान् मह्यमित्येष तु पूर्वानुक्रमः । कुमारस्य पुनः कुतः संप्रदाय इति पृच्छामि ।

लवः । स्वतःप्रकाशान्यावयोरस्त्राणि ।

(घ) रामः । (विचिन्त्य) किं न संभाव्यते कोऽपि प्रकृष्टपुण्यपरीपाकोपाऽऽदानो महिमा स्यात् । द्विवचनं तु कथम् ।

लवः । भ्रातरावावां यमजौ ।

रामः । स तर्हि द्वितीयः क्व ।

( नेपथ्ये )

भाण्डायन भाण्डायन

---

(क) सरहस्येति रहस्यं मन्त्रसमूहः तत्सहिते प्रयोगसंहरणे येषां तानि आम्नायवन्ति सम्प्रदायसिद्धानि भवन्ति । गुरूपदेशं विना दुर्लभानीति भावः ॥

(ख) ब्रह्मादय इति । अयं श्लोकः पूर्वाङ्के व्याख्यातः ॥ १५ ॥

(ग) एतदिति एतेषां मन्त्राणां पारायणं समग्राभ्यासेन पारगमनं तेन समग्रा मन्त्रा लक्ष्यन्ते । तद्रूपां उपनिषदं गुह्यविद्यां । परःसहस्राः सहस्रात् पराः 'पारस्कराऽऽदित्वात् ' सुट् ' । समासश्च । ये परिवत्सराः वर्षाणि तेषु अन्तेवासिने शिष्याय कौशिकाय कुशिकसुताय । सम्प्रदायः गुरुपरम्पराऽऽगतो व्याख्याप्रकारः ॥

(घ) प्रकृष्टेति प्रकृष्टं यत् पुण्यं तस्य परीपाकः परिणामः तदेव उपाऽऽदानं कारणं यस्य ॥

(क) आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

(ख) रामः । अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम् ।
नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

लवः । अयमसौ मम ज्यायानार्यः कुशो नाम भरताऽऽश्रमात् प्रतिनिवृत्तः ।

रामः । (सकौतुकम्) वत्स इत आह्वयैनमायुष्मन्तम् ।

लवः । एवम् । (इति परिक्रामति)

(ततः प्रविशति कुशः)

(ग) कुशः । (साद्भुतहर्षधैर्यं धनुरास्फालयन्) ।

---

(क) **आयुष्मत इति** । आयुष्मतः प्रशस्ताऽऽयुषः । प्राशस्त्ये 'मतुप्'। लवस्य । नरेन्द्रस्य राज्ञः सैन्यैः सह आयोधनं युद्धं ननु वर्तते इति शेषः । भाण्डायनं प्रति प्रश्नः। सखे तथेति । युद्धं वर्तत इति योज्यं । भाण्डायनस्योत्तरं । किमात्थ किं ब्रवीषि । इति आकाशवचनं । तत् श्रुत्वा सक्रोधवचनं कुशस्य—अद्येति अद्य भुवनेषु जगत्सु अधिराज इति शब्दः अस्तं नाशं एतु गच्छतु । अद्य क्षत्रस्य क्षत्रियजातेः शस्त्रशिखिनः शस्त्राण्येव शिखिनः अग्नयः शर्म शान्ति यान्तु ॥ १६ ॥

(ख) **अथेति** । इन्द्रमणिः इंद्रनीलः स इव मेचका नीला छविः यस्य सः । कोऽयं ध्वनिनैव कण्ठरवेणैव । दत्ताः पुलकाः यस्मै तथाभूतं मां करोति । अत्रोपमा । नवः नूतनः नीलः नीरधरः जलधरः तस्य धीरं यत् गर्जितं निर्घोषः तेन क्षणं बद्धाः । यद्वा गर्जितक्षणे गर्जितकाले । यद्वा गर्जितेन क्षणः उत्सवः तेन बद्धाः उद्भिन्नाः कुड्मलाः मुकुलाः यस्य तादृशस्य कदम्बस्य डम्बरं सदृशं ॥ १७ ॥

(ग) साद्भुतहर्षधैर्यं । सर्वजयाऽऽशंकया अद्भुतत्वं । स्वाभिलषितयुद्धलाभेन हर्षः । युद्धे धैर्यं च । तैः सहितं । क्रियाविशेषणमेतत् ॥

(क) दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
र्दृप्तानां दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दीप्रास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥१८॥

(इति विकटं परिक्रामति)

(ख) रामः । कोऽप्यस्मिन् क्षत्रियपोतके पौरुषातिरेकः ।

(ग) दृष्टिस्तृणीकृतजगत्त्रयसत्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

लवः । (उपसृत्य) जयत्यार्यः ।

कुशः । नन्वायुष्मन् किमियं वार्ता युद्धं युद्धमिति ।

---

(क) दत्तेन्द्रेति । वैवस्वतात् विवस्वतः सूर्यस्य अपत्यं वैवस्वतः श्राद्धदेवाऽऽख्यः सप्तमो मनुः तस्मात् आ अभिव्याप्य । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । दत्ता इन्द्रस्य अभयरूपा असुरेभ्यः परित्राणरूपा दक्षिणा यैः तैः । दृप्तानां सगर्वाणां दहनाय नाशाय । दीपितः निजः स्वीयः क्षत्रप्रतापः क्षात्रियप्रभावः स एव अग्निः यैः तैः । आदित्यैआदित्यस्य सूर्यस्य अपत्यानि आदित्याः तैःसूर्यवंशोद्भवैः क्षत्रियैः 'दित्यदित्या ऽऽदित्ये'-ति 'ण्ये' अल्लोपयलोपयोश्च रूपं । नृपतिभिः राजभिः सह विग्रहः युद्धं यदि भवेत् । ततः तर्हि मम । दीप्राणां दीपनशीलानां 'नमिकम्पी'-ति दीपेः 'रः' । अस्त्राणां स्फुरन्त्यः उग्राश्च भयङ्करा याः दीधितयः किरणाः ता एव शिखाः दीपप्रभाः ताभिः नीराजिता कृतनीराजना ज्या मौर्वी यस्य तत् । एतत् धनुः धन्यं सार्थकं भवेत् । अत्र प्रतिवीरवर्णनेन स्वस्मिन् अत्यद्भुतपराक्रमशालिता व्यज्यते ॥ १८ ॥

(ख) अतिरेकः अतिशयः ॥

(ग) दृष्टिरिति । दृष्टिः दर्शनं । तृणीकृतः अतृणं तृणं यथा संपद्यते तथा कृतः जगत्त्रयस्य त्रिभुवनस्य सत्वसारः बलोत्कर्षः यया तथाभूता अस्ति । धीरा गाम्भीर्यवती उद्धता दृप्ता च गतिः गमनं धारित्रीं नमयतीव । कौमारकेऽपि बाल्येऽपि गिरिवत् पर्वतवत् गुरुतां गौरवं दधानः । अयं बालः किं वा वीरः रसः किं । उत सविग्रहः विग्रहेण देहेन सहितः दर्पः एव वा । एवः वार्थे । संशयालङ्कारः ॥ १९ ॥

(क) **लवः** । यत्किञ्चिदेतत् । दृप्तभावमुत्सृज्याऽऽर्योऽस्मिन् विनयेन वर्तताम् ।

**कुशः** । किमर्थम् ।

**लवः** । यदत्र देवो रघुपतिस्तिष्ठति । स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्सन्निकर्षस्य ।

(ख) **कुशः** । ( सतर्कम् ) स रामायणकथानायको ब्रह्मकोशस्य गोपायिता ।

**लवः** । अथ किम् ।

(ग) **कुशः** । आशंसनीयपुण्यदर्शनः स महात्मा किन्तु कथमस्माभिरुपगन्तव्य इति न संप्रधारयामि ।

(घ) **लवः** । यथा गुरुस्तथोपसदनेन ।

**कुशः** । अपि कथं नामैतत् ।

(ङ) **लवः** । अत्युदात्तसुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्य इति सख्येन मामुपतिष्ठते तेन तत्संबन्धेन धर्मतात एवायं राजर्षिरिति ।

(च) **कुशः** । संप्रत्यवचनीयो राजन्येऽपि प्रश्रयः ।

(छ) **लवः** । पश्यत्वेनमाकारानुभावगाम्भीर्यसंभाव्यमानविविधलोकोत्तरचरितातिशयमार्यो महापुरुषम् ।

---

(क) यत्किञ्चिदेतत् । न तत्र किञ्चित् प्रतिविधातव्यमिति भावः । दृप्तभावं गर्वम् ॥

(ख) ब्रह्मकोशस्य कोशवत् रक्ष्यस्य ब्राह्मणकुलस्य गोपायिता रक्षकः । गुपेः 'आय'-प्रत्ययान्तात् 'तृच्' ॥

(ग) आशंसनीयेति आशंसनीयं प्रार्थनीयं पुण्यं दर्शनं यस्य सः कथं केन प्रकारेण । उपचारेणेति यावत् ॥

(घ) उपसदनेन समीपगमनेन ॥

(ङ) और्मिलेयः ऊर्मिलापुत्रः । 'स्त्रीभ्यो ढक्' इति ढक् ॥

(च) संप्रति अधुना । राजन्येपि क्षत्रियेपि अस्मिन् प्रश्रयः प्रणयः अवचनीयः अनिद्यः । अस्यापि नतिर्युज्यत एवेति भावः ॥

(छ) आकारेति आकारेण सौम्याऽऽकारेण अनुभावेन प्रभावेण गाम्भीर्येण निगूढाभिप्रायत्वेन च सम्भाव्यमानः तर्क्यमाणः विविधः नानाविधः लोकोत्तरः लोकातिशयितः चरितातिशयः लोकोत्तरं चरितं यस्य तं महापुरुषं पश्यतु इति सम्बन्धः ॥

कुशः । ( निर्वर्ण्य )

अहो प्रासादिकं रूपमनुभावश्च पावनः ।
स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत् ॥ २० ॥

( उपसृत्य ) तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

रामः । एह्येह्यायुष्मन् ।

अमृताऽऽध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥

( परिष्वज्य स्वगतम् ) तत्किमपत्यमयं दारकः ।

अङ्गादङ्गात्स्नुत इव निजो देहजः स्नेहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेव ।

---

अहो इति । अहो इत्याश्चर्ये । प्रासादिकं प्रसादकरं । अस्याऽऽकृतिं दृष्ट्वा अयमनुग्रहशील इति सर्वेषां मनसि भासत इति भावः । अस्य अनुभावश्च पावनः लोकपवित्रीकरणशीलः । एतत्प्रभावं श्रुत्वा लोकाः पवित्रा भवन्तीत्यर्थः । रामायणकविः वाल्मीकिः देवीं वाचं व्यवीवृतत् विवर्तयामास रामायणकाव्यरूपेण परिणतां अकरोत् । स्थाने युक्तमेव । एतादृशं धीरोदात्तं नायकं उद्दिश्य वाल्मीकेः प्रयासः सार्थक इति भावः ॥ २० ॥

अमृतेति । अमृतेन जलेन आध्मातः पूर्णः यः जीमूतः मेघः 'पयः कीलालममृतं' 'घनजीमूतमुदिरे'—ति चाऽमरः । स इव सिंहसंहननः वराङ्गरूपोपेतः तस्य । 'वराङ्गरूपोपेतो यः सिंहसंहननो हि सः' इत्यमरः । स्निग्धसंहननस्येति पाठे स्निग्धं मसृणं संहननं गात्रं यस्य तस्य ते । 'गात्रं वपुः संहनन'—मित्यमरः । परिष्वङ्गाय परिष्वक्तुं आलिङ्गितुं । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । परिष्वङ्गं कर्तुमित्यर्थे 'क्रियार्थोपपदस्ये'—ति चतुर्थी । अयं जनः मद्रूपः वात्सल्यात् स्नेहात् हेतोः उत्कण्ठते उत्सुको भवति ॥ २१ ॥

दारकः बालकः ॥

अङ्गादिति । निजः स्वीयः देहजः मद्देहात् जातः स्नेहसारः स्नेहरूपः सारः निर्यासः । अंगादंगात् प्रत्यङ्गात् स्नुतः प्रस्नुतः दारकरूपेण परिणतः किं । मम चेतनाधातुः चैतन्यरूपः पदार्थः बहिः निर्गत्य एतद्रूपेण प्रादुर्भूय प्रकटीभूय स्थित इव ।

**सान्द्रानन्दक्षुभितहृदयप्रस्नवेनेव सृष्टो**
**गात्रं श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥**

लवः । तात ललाटंतपो घर्मदीधितिस्तदत्र सालच्छाये मुहूर्तमासनपरिग्रहं करोतु तातः ।

**रामः** । यदभिरुचितं वत्सयोः । ( सर्वे परिक्रम्योपविशन्ति स्वगतम् ) ।

**रामः** । ( स्वगतम् )

**अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः**
**साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥**

**वपुरविहितसिद्धा एव लक्ष्मीविलासाः**
**प्रतिजनकमनीयं कान्तिमत्केतयन्ति ।**
**अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा**
**विकसितमिवपद्मं बिन्दवो माकरन्दाः ॥ २४ ॥**

---

सान्द्रेण घनेन आनन्देन क्षुभितं द्रवीभूतं यत् हृदयं तस्य प्रस्रवेन द्रवेण सृष्ट इव अयं दारकः। श्लेषे आलिङ्गने कृते सति अमृतरसस्रोतसा अमृतरसप्रवाहेण मे गात्रं सिञ्चतीव । उत्प्रेक्षाचतुष्टयम् ॥ २२ ॥

ललाटंतपः । 'असूर्यललाटयो'—रिति 'खश्' 'अरुर्दिषत्—इति 'मुम' घर्मदीधितिः घर्माः उष्णाः दीधितयः मरीचयो यस्य सः सूर्यः अस्ति। तत् ततो हेतोः सालानां वृक्षविशेषाणां छाया सालछायं तस्मिन्। 'छायाबाहुल्ये' इति नपुंसकत्वम्

वत्सयोः । संप्रदानस्य शेषत्वविवक्षायां षष्ठी। वत्सायेति पाठे 'रुच्यर्थानां प्रियमाणः' इति संप्रदानत्वम् ॥

**अहो इति** अहो । प्रश्रयस्य विनयस्य योगेऽपि संबंधेपि अनयोः अतिविनीतत्वेपि गतिःगमनं स्थितिः अवस्थानं आसनं उपवेशनं इत्यादयः भावाः क्रियाः साम्राज्यशंसिनः भाविसाम्राज्यसूचकाः सन्ति ॥ २३ ॥

**वपुरिति** । नास्ति विहितं विधानं यस्मिन् कर्मणि यथा तथा सिद्धाः अनायासेन सम्पन्नाः । स्वभावसिद्धा इति यावत् । तादृशा एव लक्ष्मीविलासाः शोभातिशयाः प्रतिजनकमनीयं जनं जनं प्रति प्रतिजनं कमनीयं सर्वजनमनोहरं। वीप्सायां 'अव्ययीभावः'। कान्तिमत् प्रशस्तकान्ति । प्रशंसायां 'मतुप्' । वपुः अनयोः शरीरं केतयन्ति भूषयन्ति । अत्र उपमामाह ते प्रसिद्धाः मनोज्ञाः मनोहारिणः रश्मयः किरणाः अमलिनं निर्मलं रत्नमिव । मकरन्दस्य इमे माकरंदाः बिन्दवः विकसितं पद्ममिव । इदमपि साम्राज्यशंसि चिह्नमिति भावः ॥ २४ ॥

(क) भूयिष्ठां च रघुकुलकुमारच्छायामनयोः पश्यामि ।

(ख) कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसबन्धुरांशयोः ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च माङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

(ग) ( सूक्ष्मं निरूप्य ) अये न केवलमस्मदङ्गसंवादिन्याकृतिः ।

(घ) अपि जनकसुतायास्तच्च तच्चाऽऽनुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

(ङ) मुक्ताऽच्छदन्तच्छविसुन्दरेयं सैवोष्ठमुद्रा स च कर्णपाशः ।

---

(क) छायां सादृश्यम् ॥

(ख) कठोरेति । कठोरः तरुणः यः पारावतः कपोतः तस्य कण्ठ इव मेचकं श्यामं । अबन्धुराः नानुन्नताः नानताः समा इति यावत् । तथा भूताः अंशाः अवयवा ययोस्तयोः । वृषस्कन्धं वृषस्येव स्कन्धौ यस्य तत् वपुः शरीरं । सर्वावयवानवद्यमस्तीत्यर्थः । प्रसन्नं सिंहवत् स्तिमितं निश्चलं वीक्षितं अवलोकनं । मङ्गल्यस्य मंगलसूचकस्य मृदङ्गस्येव मांसलः गम्भीरः ध्वनिः कण्ठरवः । इदमपि साम्राज्यशंसि ॥ २५ ॥

(ग) संवादिनी सुसदृशी ॥

(घ) अपीति । आनुरूपं अनुरूपायाः सुसदृश्याः भावः सादृश्यं । तच्चतच्च सर्वं नैपुणोन्नेयं निपुणत्वेन उन्नेयं सुतर्क्यं इह शिशुयुग्मे स्फुटं अस्ति । अनुरूपनिपुणशब्दाभ्यां 'हायनान्तयुवाऽऽदिभ्योऽण्' इति भावार्थे 'अण्' । अभिनवं विकसितं यत् शतपत्रं कुशेशयं तस्य श्रीरिव श्रीर्यस्य तत् । प्रियायाः तत् पूर्वानुभूतं आस्यं । पुनरिव । इव शब्दो वाक्यालंकारे । अक्ष्णोः गोचरीभूतं ननु । उत्प्रेक्षाऽलङ्कारः ॥ २६ ॥

(ङ) मुक्तेति । मुक्ताः मौक्तिकानि तद्वत् अच्छाः निर्मलाः ये दन्ताः तेषां छविः कान्तिः तया सुन्दरा । इयं सा एव ओष्ठमुद्रा ओष्ठयोर्भंगी । स च । चः एवार्थे । कर्णपाशः शोभनौ कर्णौ । 'पाशः केशादिपूर्वः स्यात्तत्संघे कर्णपूर्वकः । सुकर्णे'-इति मेदिनी । शोभार्थे 'पाश'प्रत्ययः इति केनचिदुक्तं तदत्यन्तमसंगतं । 'याप्ये पाशप्' इति सूत्रेण कुत्सिते 'पाशप्'प्रत्ययविधानात् । नेत्रे पुनः । पुनरिति वाक्यालंकारे ।

२२

नेत्रे पुनर्यद्यपि रक्तनीले तथापि सौभाग्यगुणः स एव ॥२७॥

(क) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्यक्ता। इयं चानयोराकृतिर्विपुश्च। यदपि स्वतःप्रकाशान्यस्त्राणीति तत्र विमृशामि। अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुद्भूतं स्यात्। नह्यसाम्प्रदायिकान्यस्त्राणि पूर्वेषामप्यनुशुश्रुम। इत्थं च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते। भूयिष्ठं च मया द्विधा प्रतिपन्नो देव्या गर्भिणीभाव आसीत्। ( सास्रम )

(ख) पुरा रूढे स्नेहे परिचयविकासादुपचिते-
रहो विश्रब्धाया अपि सहजलज्जाजडदृशः।
मयैवाऽऽदौ ज्ञातः करतलपरामर्शकलया
द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥

---

यद्यपि रक्तनीले रक्तनीलवर्णे तथापि सौभाग्यं सुभगत्वं सुन्दरत्वं स एव गुणः। स एव सीतानेत्रयोः स्थित एव। एतेन सीतायाः किञ्चिद्व्यतिरेको व्यज्यते। पुरुषाणां नेत्रयोः रक्तिमा नीलिमा च स्त्रीणां तु न तथा इति सामुद्रिकम् ॥ २७ ॥

(क) प्राचेतसेति प्राचेतसः वाल्मीकिः। विमृशामि विचारयामि। तच्चित्रदर्शनेति तस्याः चित्रदर्शनस्य प्रसंगे अवसरे भवं। शिवभागवतः इत्यादिवत् वृत्तिः। अस्त्राभ्यनुज्ञानं सर्वथेदानीं त्वत्प्रसूतिं उपस्थास्यन्ति इत्येवं रूपं उद्भूतं आविर्भूतं स्यात्। सम्भावनायां 'लिङ्'। असम्प्रदायिकानि संप्रदायः गुरुशिष्यपरम्परागतः उपदेशप्रकारः तं विना आगतानि। पूर्वेऽपि गुरूपदेशं विना अस्त्राणि न लेभिरे इत्यर्थः। इत्थं च एषोऽपि। अनयोः अवलोकनजनितः मे हृदयस्य सुखातिशयः संप्लवमानं आकुलीभवन्तं आत्मानं मनः विस्रम्भयते विश्वासयते। तौ एतौ तनयौ तवैवेति निश्चाययतीत्यर्थः। 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति न्यायादिति भावः। भूयिष्ठं। क्रियाविशेषणं। सास्रं। देवीस्मरणात् अश्रुपातः ॥

(ख) पुरेति। पुरा स्नेहे प्रेमणि रूढे सञ्जाते। परिचयस्य दीर्घकालसाहचर्यस्य विकासाद्धेतोः। उपचिते वृद्धिं याते सति। रहः रहसि एकान्ते। इदं अव्ययं। विश्रब्धायाः अपि विश्वस्तायाः अपि। सहजया स्वाभाविक्या लज्जया जडे जडतामापन्ने निश्चेष्टे दृशौ चक्षुषी यस्याः तस्याः सीतायाः। गर्भग्रन्थिः गर्भरूपो ग्रन्थिः मयैव आदौ प्रथमं। करतलेन यः परामर्शः स्पर्शः तस्य कलया चातुर्येण। द्विधाऽस्तीति ज्ञातः अनुभूतः। तदनु तत्पश्चात् कैरपि कतिपयैः अपि दिवसैः तयाऽपि ज्ञातः इति सम्बन्धः ॥ २८ ॥

( रुदित्वा ) तत् किमेतौ पृच्छामि केनाप्युपायेन ।

लवः । तात किमेतत् ।

(क) बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।
अवश्यायांबुसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥

कुशः । अयि वत्स

(ख) विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमित्येवं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

(ग) रामः । ( स्वगतम् ) अये तटस्थित आलापः । कृतं प्रश्नेन । दग्धहृदय कोऽयमाकस्मिकस्ते पारिप्लवो विकारः । एवं च निर्भिन्नहृदयाऽऽवेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु तावदन्तरयामि । ( प्रकाशम् ) वत्सौ रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्र कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि ।

(घ) कुशः । स कृत्स्न एव सन्दर्भोऽस्माकमावृत्तः । स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ ।

---

(क) बाष्पेति । अवश्याम्बुसिक्तस्य अवश्यायाः हिमबिन्दवः त एव अंबूनि तैः सिक्तस्य पुण्डरीकस्य सिताम्भोजस्य । निदर्शनालङ्कारः ॥ २९ ॥

(ख) विनेति । सीतादेव्या विना रघुपतेः किं दुःखं न । इवशब्दो वाक्यालंकारे । हिः अवधारणे । काकुरयं सर्वमेव दुःखमिति भावः । प्रियेत्यादिरर्थान्तरन्यासः । तावान् प्रकृत्यैवेत्यादिश्लोकाभ्यां वक्ष्यमाणः । अनधिगतरामायण इव न अधिगतं अर्थतः प्राप्तं रामायणं येन सः स इव त्वं । एवं किं पृच्छसि । तवायं प्रश्नोऽयुक्त इति भावः ॥ ३० ॥

(ग) तटस्थितः स्वसम्बन्धस्याबोधकः । कृतं अलं । पारिप्लवः चञ्चलः । निर्भिन्नावेगः निर्भिन्नः आविर्भूतः हृदयस्य आवेगः चित्तवैक्लव्यं यस्य । अश्रुपातवशादिति भावः । अन्तरयामि व्यवदधामि । सरस्वतीनिष्यन्दः वाङ्निर्यासः । प्रशस्तिः चरितकीर्तनम् ॥

(घ) आवृत्तः अभ्यस्तः । स्मृत्युपस्थितौ स्मृत्या उपस्थितौ । स्मृतावित्यर्थः । बालचरितस्य प्रथमस्य बालकाण्डस्य ॥

रामः। उदीरयतु वत्सः।

(क) कुशः। प्रकृत्यैव प्रिया सीता रामस्याऽऽसीन्महात्मनः।
प्रियभावः स तु तया स्वगुणैरेव वर्धितः॥ ३१॥

(ख) तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत्।
हृदयं त्वेव जानाति प्रीतियोगं परस्परम्॥ ३२॥

(ग) रामः। कष्टमतिदारुणोऽयं हृदयमर्मोद्घाटः। हा देवि एवं किल तदाऽऽसीत्। अहो निरन्वयविपर्यासविरसवृत्तयो विप्रलम्भपर्यवसायिनस्तापयन्ति संसारवृत्तान्ताः।

(घ) क्व तावानानन्दो निरतिशयविश्रम्भबहुलः
क्व तेऽन्योन्यं यत्नाः क्व च नु गहनाः कौतुकरसाः
सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति॥ ३३॥

भोः कष्टम्

(ङ) प्रियागुणसहस्राणां क्रमोन्मीलनपेशलः।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम्॥ ३४॥

---

(क) **प्रकृत्यैवेति**। प्रकृत्यैव स्वभावेनैव। प्रियभावः प्रीतिः॥ ३१॥
(ख) **तथैवेति**। हृदयं। सीतारामयोरिति शेषः॥ ३२॥
(ग) उद्घाटः प्रकटीकरणं एवं वाल्मीकिवर्णितानुरूपमेव। तदा बाल्यावस्थायां। निरन्वयेति निरन्वयेन संबन्धशून्येन। आकस्मिकेनेति यावत्। निरत्ययेति पाठे निरत्ययेन ध्वंसशून्येनेत्यर्थः। विपर्यासेन अवस्थान्तराऽऽपत्या विरसा रसशून्या वृत्तिः येषां ते विप्रलम्भपर्यवसायिनः विप्रलंभेन वियोगजन्यशोकेन रूपेण पर्यवस्यन्ति परिणमन्ति ते तादृशाः संसारवृत्तान्ताः तापयन्ति॥
(घ) **क्वेति**। निरतिशयेति निरतिशयेन सर्वातिशायिना विश्रम्भेण स्नेहेन केलिकलहेन वा बहुलः तावान् तत्प्रमाणः क्व। गहनाः सान्द्राः कौतुकरसाः उत्सवरसाः। तथापि तस्याः विरहे प्राप्तेऽपि। एष प्राणः स्फुरति। न तु पापो विरमति नश्यति। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्॥ ३३॥
(ङ) **प्रियेति**। प्रियायाः गुणसहस्राणां असंख्येयगुणानां। क्रमेण उन्मीलनं उदयः। एकोन्मीलनेति पाठे एकदैव यत् उन्मीलनमित्यर्थः। अयं पाठः रसातिशयपोषकः। तत्र

(क) तदा किञ्चित्किञ्चित् कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनमुकुलमासीन्मृगदृशः।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः।
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

कुशः। अयं च मन्दाकिनीचित्रकूटवनविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः।

(ख) त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केशरः ॥ ३६ ॥

(ग) रामः। ( सलज्जास्मितकरुणम् ) अति नामायं मुग्धः शिशुजनो

---

पेशलः। य एव कालः दुःस्मरः स्मर्तुमशक्यः तमेव आभ्यां बालाभ्यां वयं स्मारिताः। अतोऽसह्यं निरतिशयं दुःखमाविरभूदिति भावः। स्मृत्याख्योऽयं भावः॥३४॥

(क) तदेति। तदा तस्मिन् बहुशोऽनुभूते काले। मृगदृशः मृग्याः दृशौ इव दृशौ यस्याः तस्याः सीतायाः। 'कुकुट्यादीनां मण्डादिषु' इति पुम्वत्त्वं। उपमानधर्मवाचकलुप्तेयमुपमा। नेत्रयोश्चापल्यातिशयो व्यङ्ग्यः। कतिपयैः स्वल्पैः अहोभिः किञ्चित्किञ्चित् क्रमेण कृतपदं कृतस्थानं। 'पदं व्यवसितत्राणस्थाने'-त्यमरः। तत् सहस्रशः अनुभूतं स्तनमुकुलं स्तनकोरकं ईषद्विस्तारि विस्तारयुक्तं आसीत्। यत्र यस्मिन् काले वयसः तारुण्यस्य स्नेहस्य आकूतस्य स्वस्वमनोऽभिप्रायस्य च यः व्यतिकरः संबन्धः तेन घनः सान्द्रः। मदनः प्रगल्भव्यापारः प्रगल्भः प्रौढः व्यापारः यस्य तथा हृदि स्फुरति। वपुषि च मुग्धः नातिप्रौढः लज्यापारवश्यात् स्फुरति। अत्र पूर्वार्धे आसीदिति भूतनिर्देशेन उत्तरार्धे स्फुरतीति वर्तमाननिर्देशेन च मनोभ्रान्तिर्व्यज्यते। इय मध्या स्वीया नायिका। 'समानलज्जा मदना मध्ये'—ति तल्लक्षणात् ॥ ३५ ॥

(ख) त्वदर्थमेवेति। अयं शिलापट्टः महती शयनीयशिला त्वदर्थमेव अग्रतः स्थापितः। यस्य शिलापट्टस्य अभितः सर्वतः। अत्र 'अभितः परित' इति द्वितीया युक्ता। केशरः चाम्पेयवृक्षः। 'चांपेयः केशरो नागकेसरः काञ्चनाऽऽह्वयः' इत्यमरः। पुष्पैः। करणे तृतीया। प्रवृष्ट इव प्रारब्धवृष्टिरिव। 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि 'क्तः'। अनेन चांपेयेन सेवकेनेव पुष्पशय्येव सम्पादिता अतोऽत्रोपविशतु भवती इति स्वाऽऽकूतं प्रकाश्यते ॥ ३६ ॥

(ग) सलज्जास्मितकरुणं अस्य श्लोकस्य रहःस्वच्छन्दविहारसूचकत्वेन लज्जा। इमौ बालौ रहोवृत्तसूचकश्लोकमूचतुः अतो वक्तव्यावक्तव्यज्ञानविधुरौ इति स्मितं। एतादृशी प्रेयसी त्यक्ता इति करुणः शोकः। अतिमुग्धः अतिशयेन मुग्धः मूर्खः विशेषतः अरण्यचरः एवं अश्लीलं वक्तुं योग्यमयोग्यं वेति ज्ञानाभाववान्। तत्समयेति

विशेषतस्त्वरण्यचरः । हा देवि स्मरसि न वा तस्य प्रदेशस्य तत्समयविश्रम्भातिप्रसङ्गस्य साक्षिणः । कष्टं भोः कष्टम्

(क) **श्रमाम्बुशिशिरीभवत् प्रसृतमन्दमन्दाकिनी-**
**मरुत्तरलितालकाऽऽकुलललाटचन्द्रद्युति ।**
**अकुंकुमकलङ्कितोज्वलकपोलमुत्प्रेक्ष्यते**
**निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥ ३७ ॥**

( स्तम्भित इव स्थित्वा सकरुणम् ) अहो नु खलु भोः

(ख) **चिरं ध्यात्वा ध्यात्वा निहित इव निर्माय पुरतः**
**प्रवासेऽप्याश्वासं न खलु न करोति प्रियजनः ।**
**जगज्जीर्णारण्यं भवति हि विकल्पव्युपरमे**
**कुकूलानां राशौ तदनु हृदयं पच्यत इव ॥ ३८ ॥**

( नेपथ्ये )

---

तस्मिन् समये काले विश्रम्भाणां विश्वस्तस्वच्छन्दविहाराणां अतिप्रसङ्गस्य अतिबाहुल्यस्य साक्षिणः । तस्य प्रदेशस्य स्मरसि । तं प्रदेशं स्मरसीत्यर्थः । 'अधीगर्थदयेशां कर्मणि ' इति कर्मणि शेषे ' षष्ठी ' ॥

(क) तदेव सुरतान्तवर्णनं प्रस्तौति--**श्रमेति** । श्रमेण सुरतश्रमेण जनितैः अम्बुभिः स्वेदबिन्दुभिः शिशिरीभवत् शीतलं भवत् । पुनश्च प्रसृतेन इतस्ततः चलता मन्देन मन्दाकिनीनाम्नी चित्रकूटस्था नदी न तु स्वर्णदी तस्याः इहासम्भवात् । तत्सम्बन्धिना मरुता वायुना तरलितैः चञ्चलीकृतैः अलकैः चूर्णकुन्तलैः आकुला व्याकुला तिरोहिता ललाटचन्द्रस्य द्युतिः कान्तिः यस्य तत् । कुंकुमेन कलङ्कितौ सञ्जातकलंकौ न भवतः तौ उज्वलौ कपोलौ यस्मिन तत् । पुनश्च निराभरणः आभरणरहितः तथापि सुन्दरः श्रवणपाशः शोभनकर्णयुगलं तेन सौम्यं सोम इव प्रियदर्शनं तव मुखं मया उत्प्रेक्ष्यते स्मर्यते । सम्भोगशृङ्गारोऽत्र करुणरसस्याङ्गम् ॥ ३७ ॥

(ख) **चिरमिति** । चिरं चिरकालं नैरन्तर्येण ध्यात्वा ध्यात्वा पुनःपुनः चिन्तयित्वा पुरतः अग्रतः दीर्घकालनिरन्तरध्यानबलेन निर्माय मूर्ति उत्पाद्य निहितः इव स्थापित इव प्रियजनः। प्रवासेपि वियोगेपि आश्वासं सान्त्वनां न खलु करोति इति न अपितु करोत्येव । द्वौ नञौ प्रकृतमर्थं गमयतः । विकल्पस्य अलीकप्रियजनकल्पकस्य सङ्कल्पस्य व्युपरमे अत्यन्तनाशे सति । जगत् जीर्णारण्यं तत्तुल्यं भवति । तदनु तदनन्तरं हृदयं कुकूलानां अग्निदीप्तानां धान्यतुषाणां राशौ पच्यते इव । पुटपाकवत् निरतिशयं तप्यत इत्यर्थः ॥ ३८ ॥

(क) वसिष्ठो वाल्मीकिर्दशरथमहिष्योथ जनकः
सहैवारुन्धत्या शिशुकलहमाकर्ण्य सभयाः ।
जराग्रस्तैर्गात्रैरथ खलु विदूराऽऽश्रमतया
चिरेणाऽऽगच्छन्ति त्वरितमनसोपि श्रमजडाः ॥ ३९ ॥

रामः । कथं भगवन्तावरुन्धतीवसिष्ठौ । अम्बा जनकश्चात्रैव । कष्टं कथं खल्वेते द्रष्टव्याः । ( सकरुणं विलोक्य ) अहह तातजनकस्तु दैवादत्रैवाऽऽयात इति वज्रेण ताडितोस्मि मन्दभाग्यः ।

(ख) सम्बन्धस्पृहणीयताप्रमुदितैर्जुष्टे वसिष्ठाऽऽदिभि-
र्दृष्ट्वाऽपत्यविवाहमङ्गलमहे तत्तातयोः संगतम् ।
पश्यन्नीदृशमीदृशे पितृसखं वृत्ते महावैशसे
दीर्ये किं न सहस्रधाऽहमथवा रामेण किं दुष्करम् ॥४०॥

( नेपथ्ये )

कष्टं कष्टम्

---

(क) वसिष्ठ इति । दशरथमहिष्यः कौसल्याऽऽद्याः शिशुकलहं लवचन्द्रकेतु-कलहं आकर्ण्य श्रुत्वा । सर्वे सभयाः सन्तः जरया ग्रस्तैः जीर्णैः । गात्रैः शरीरैः विदूराश्रमतया विदूरः अतिदूरः आश्रमः येषां तेषां भावः तत्ता तया । अति-दूराऽश्रमवर्तित्वेन त्वरितमनसोपि । श्रमेण जडाः सन्तः चिरेण आगच्छन्ति ॥ ३९ ॥

(ख) सम्बन्धेति । उभयोरपि कुलयोः शुद्धत्वेन संम्बन्धस्य स्पृहणीयतया श्लाघ्य-तया प्रमुदितैः हर्षं प्राप्तैः वसिष्ठादिभिः ऋषिभिः जुष्टे युक्ते । अपत्ययोः कन्यापुत्रयोः विवाह एव मङ्गलरूपे महे उत्सहे तातयोः पितुः श्वशुरस्य च तत् अनुभूतं तादृशं अन्यानुपमेयं सङ्गतं सख्यं दृष्ट्वा । ईदृशे सापवादं सीतात्यागरूपे महावैशसे महति अनिष्टे वृत्ते सञ्जाते सति । ईदृशं तद्दुःखस्मरणेन अतिदुःखितं पितृसखं पितुः दशरथस्य सखायं । 'राजाहःसखिभ्यष्टच' इति समासान्तः 'टच्' । पश्यन् सहस्रधा किं न दीर्ये न विदीर्णो भवामि । 'दॄ' विदारणे इति दैवादिकस्य 'लट्'उत्तमपुरुषैकवचनं अथवा पक्षान्तरे । रामेण । स्वनामग्रहणं अविमृश्यकारितां निस्स्नेहत्वञ्च व्यनक्ति । किं दुष्करं । अपि तु सर्वमप्यकार्यं सुकरमेव । यस्य सीताऽऽस्यतदपत्यत्यागोऽनुचितोपि सुकरः तस्य उचितं तद्दर्शनं न दुष्करमिति भावः ॥ ४० ॥

(क) अनुभावमात्रसमुपस्थितश्रियं
सहसैव वीक्ष्य रघुनाथमीदृशम् ।
प्रथमप्रबुद्धजनकप्रबोधनाद्
विधुराः प्रमोहमुपयान्ति मातरः ॥ ४१ ॥

रामः । हा तात हा मातरः हा जनक

(ख) जनकानां रघूणां च यत् कृत्स्नं गोत्रमङ्गलम् ।
तस्मिन्नकरुणे पापे वृथा वः करुणा मयि ॥ ४२ ॥

यावत् संभावयामि । ( इत्युत्तिष्ठति )

कुशलवौ । इत इतस्तातः । ( सकरुणाऽऽकुलं परिक्रम्य निष्क्रान्ताः सर्वे ) ।

कुमारप्रत्यभिज्ञानो नाम

षष्ठोऽङ्कः ।

---

(क) **अनुभावेति** । अनुभाव एव प्रभाव एव अवधारणे 'मात्रच्' । समुपस्थिता विद्यमाना श्रीः शोभा यस्य तं । सीताविरहादतिकृशकायत्वेन अनुभावमात्रेण स एवायमिति कथञ्चित् प्रत्यभिज्ञातुं शक्यं । ईदृशं रघुनाथं रामं **सहसैव** अकस्मादेव वीक्ष्य दृष्ट्वा । प्रथमं प्रकृष्टं मूढस्य मोहं उपगतस्य जनकस्य अत्र प्रथमशब्देन कौसल्यादिभ्यो मातृभ्योऽपि जनकस्य रामे स्नेहातिशयः सूच्यते । प्रबोधनात् अनन्तरं विधुराः विरहाकुलाः मातरः शोकाऽऽवेशेन प्रमोहं मूर्छां उपयान्ति प्राप्नुवन्ति ॥४१॥
(ख) **जनकानामिति** । गोत्रयोः उभयोः वंशयोः मंगलं कृत्स्नं सम्पूर्णमङ्गलं आसीत् । तस्मिन् सर्वमङ्गलनिदानभूतं सीतारूपं मङ्गले तद्विषये अकरुणे आसन्नप्रसवावस्थायां परित्यागात् करुणया दयया विहीने पापे अतिनृशंसकर्मकारिणि मयि वः करुणा वृथा । अहं तादृशातिनृशंसकर्मा भवतां न करुणार्ह इति भावः ॥ ४२ ॥
(ग) इति भावभूतार्थबोधिकायां षष्ठोऽङ्कः ॥

---

# सप्तमोऽङ्कः

( ततः प्रविशति लक्ष्मणः )

(क) लक्ष्मणः। भो भो अद्य खलु भगवता वाल्मीकिना सब्रह्मक्षत्रपौरजानपदाः प्रजाः सहास्माभिराहूय कृत्स्न एव सदेवासुरतिर्यगुरगनारकनिकायो जङ्गमः स्थावरश्च भूतग्रामः स्वप्रभावेण सन्निधापितः। आदिष्टश्चाहमार्येण वत्स लक्ष्मण भगवता वाल्मीकिना स्वकृतिमप्सरोभिः प्रयुज्यमानां द्रष्टुमुपनिमन्त्रिताः स्मः। तद्गङ्गातीरमातोद्यस्थानमुपगम्य क्रियतां समाजसन्निवेश इति। कृतश्च मर्त्यामर्त्यस्य भूतग्रामस्य समुचितस्थानसन्निवेशो मया। अयं तु

(ख) राज्याऽऽश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रतः।
वाल्मीकिगौरवादार्य इत एवाभिवर्त्तते ॥ १ ॥

( ततः प्रविशति रामः )

(ग) रामः। वत्स लक्ष्मण अपि स्थिता रङ्गप्रेक्षकाः।

लक्ष्मणः। अथ किम्।

(घ) रामः। इमौ पुनर्वत्सौ कुशलवौ कुमारचन्द्रकेतुसदृशीं स्थानप्रतिपत्तिं लम्भयितव्यौ।

---

(क) सब्रह्मेति ब्रह्मभिः ब्राह्मणैः क्षत्रैः क्षत्रियैः पौरैः नागरिकैः जानपदैः देशभवैः सहिताः। प्रजाः। तिर्यञ्चः पशुपक्ष्यादयः नारकाः नरकस्थाः तेषां निकायः समूहः। स्थावरः। स्थावराणां सन्निधापनं तदधिष्ठातृदेवतारूपेण। स्वप्रभावेण आर्षेण तपःप्रभावेण। सन्निधापितः संनिधिं प्रापितः। समुचितेषु स्थानेषु सन्निवेशः स्थापनं ॥

(ख) राज्येति। राज्यरूपे आश्रमे यो निवासः तस्मिन्नपि। प्राप्तं कष्टसाध्यं मुनिव्रतं ब्रह्मचर्यं येन सः। दारान्तरपरिग्रहाभावादिति भावः ॥ १ ॥

(ग) अपि स्थिताः। अपिः प्रश्नार्थे। उपनिमन्त्रितानां सर्वेषां समुचितेषु स्थानेषु स्थितिस्त्वया कारिता किं इति भावः ॥

(घ) स्थानप्रतिपत्तिं उपवेशनप्राप्तिं। लम्भयितव्यौ प्रापयितव्यौ ॥

(क) लक्ष्मणः । प्रभुस्नेहप्रत्ययाचथैव कृतम् । इदं त्वास्तीर्णं राजासनमुपविशत्वार्यः ।

रामः । ( उपविशति )

लक्ष्मणः । प्रस्तूयतां भोः ।

( प्रविश्य )

(ख) सूत्रधारः । भो भो भगवान् भूतार्थवादी प्राचेतसः सजङ्गमस्थावरं जगदाज्ञापयति यदिदमस्माभिरार्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसं किञ्चिदुपनिबद्धं तत्र कार्यगौरवादवधातव्यमिति ।

(ग) रामः । एतदुक्तं भवति । साक्षात्कृतधर्माण ऋषयः तेषामृतसाराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्त इत्यनभिशङ्कनीयानीति ।

( नेपथ्ये )

---

(क) प्रभुस्नेहप्रत्ययात् प्रभोः तव स्नेहस्य प्रत्ययात् ज्ञानात् । तव सर्वेषु वात्सल्यं ज्ञात्वा तथैव कृतं अनुष्ठितम् ॥

(ख) भूतार्थवादी भूतं सत्यं अर्थं वदति तच्छीलः । 'भूतं क्ष्मादौ पिशाचाऽऽदौ न्याय्ये सत्योपमानयोः' इति विश्वः । प्राचेतसः वाल्मीकिः । समुद्वीक्ष्य साक्षात्कृत्य पावनं द्रष्टॄणां पवित्रीकरणं । करुणः अद्भुतश्च रसः यस्मिन् तत् । किञ्चित् । इति विन-

[illegible] । उप [illegible] रचितं । कार्यगौरवात् कार्यस्य अभिनेयस्य

[illegible] तात् । अवधातव्यं सावधानैः [illegible]

(क) हा अज्जउत्त हा कुमार लक्खण एआइणिं मन्दभाइणिं असरणं अरण्णे आसण्णप्पसववेअणं हदासं सावदा मं अहिलसन्ति । साहं दाणिं मन्दभाइणी भाईरहीए अत्ताणं णिक्खिविस्सं (१)

लक्ष्मणः । (आत्मगतम्) कष्टं बतान्यदेव किमपि ।

(ख) सूत्रधारः । विश्वम्भराऽऽत्मजा देवी राज्ञा त्यक्ता महावने ।
प्राप्तप्रसवमात्मानं गङ्गादेव्यां विमुञ्चति ॥ २ ॥

(इति निष्क्रान्तः)

(ग) रामः । (साऽऽवेगम्) देवि देवि क्षणं प्रतीक्षस्व ।

लक्ष्मणः । आर्य नाटकमिदम् नाटकमिदम् ।

(घ) रामः । हा देवि दण्डकारण्यवासप्रियसखि एष ते रामादैवदुर्विपाकः ।

---

(१) हा आर्यपुत्र हा कुमार लक्ष्मण एकाकिनीं मन्दभागिनीमशरणामरण्य आसन्नप्रसववेदनां हताऽऽशां श्वापदा मामभिलषन्ति । साऽहमिदानीं मंदभागिनी भागीरथ्यामात्मानं निक्षेप्स्यामि ।

---

(क) एकाकिनीं असहायां । अशरणां न शरणं रक्षणं यस्याः तां । आसन्नेति आसन्ना प्राप्ता प्रसववेदना यस्याः तां । हताशां हता नष्टा आशा यस्याः तां । सापवादं त्यक्तत्वात् पुनः रामदर्शनाऽऽशा मम नष्टेति भावः । श्वापदाः शुनः पदानीव पदानि येषां ते हिंस्राः आरण्यकाः पशवः । हताशश्वापदा इति समस्तपाठे हता निन्द्या मद्रक्षणाविषयिणी आशा येषां ते इति व्याख्येयम् ॥

(ख) विश्वम्भरेति । प्राप्तप्रसवं प्राप्तः प्रसवकालः यस्य तं । आत्मानं स्वदेहम् ॥ २ ॥

(ग) प्रतीक्षस्व । मा त्यजेति भावः । लक्ष्मण अवेक्षस्वेति पाठे अवेक्षस्व अवलोकय । यथाऽत्र गंगायां स्वदेहं न त्यजति तथा यतस्वेति भावः ॥

(घ) दैवदुर्विपाकः दैवस्य दुर्विपाकः दुष्टः परिणामः ॥

लक्ष्मणः । आर्य दृश्यतां तावत् प्रबन्धार्थः ।

(क) रामः । एष सज्जोस्मि वज्रमयः ।

(ख) ( ततः प्रविशत्युत्सङ्गितैकैकदारकाभ्यां पृथ्वीगङ्गाभ्यामवलम्बिता सीता )

(ग) रामः । वत्स लक्ष्मण असंविज्ञातमनिबन्धनमन्धतमसमिव प्रविशामि । धारय माम् ।

(घ) देव्यौ । समाश्वसिहि कल्याणि दिष्ट्या वैदेहि वर्धसे ।
अन्तर्जलं प्रसूताऽसि रघुवंशधरौ सुतौ ॥ ३ ॥

सीता । ( समाश्वस्य ) दिट्ठिआ दारए प्पसूद ह्मि । हा अज्जउत्त । ( १ ) ( इति मूर्च्छति )

(ङ) लक्ष्मणः । ( पादयोर्निपत्य ) आर्य आर्य दिष्ट्या वर्धामहे कल्याणप्ररोहो रघुवंशः । ( विलोक्य ) हा हा कथं क्षुभितबाष्पोत्पीडः प्रमुग्ध एवाऽऽर्यः । ( इति वीजयति )

पृथ्वी । वत्से समाश्वसिहि समाश्वसिहि ।

---

( १ ) दिष्ट्या दारकौ प्रसूताऽस्मि । हा आर्यपुत्र ।

---

ठेनः ॥

**सीता** । ( आश्वस्य ) भअवदि का तुमं इअं अ ( १ )

**पृथ्वी** । इयं ते श्वशुरकुलदेवता भागीरथी ।

**सीता** । भअवदि णमो दे णमो दे ( २ )

(क) **भागीरथी** । चारित्र्योपचितां कल्याणसम्पदमधिगच्छ ।

**लक्ष्मणः** । अनुगृहीताः स्मः ।

**भागीरथी** । इयन्तु जननी ते वसुन्धरा ।

**सीता** । हा अम्ब ईदिसी अहं तुए दिट्ठा ( ३ )

**पृथ्वी** । एहि वत्से एहि पुत्रि ( इति सीतामालिङ्गय मूर्च्छति )

(ख) **लक्ष्मणः** । ( सहर्षम् ) दिष्ट्या पृथ्वीगङ्गाभ्यामभ्युपपन्नाऽऽर्या ।

**रामः** । ( अवलोक्य ) करुणतरं खल्वेतत् वर्तते ।

(ग) **भागीरथी** । विश्वंभराऽपि नाम व्यथत इति जितमपत्यस्नेहेन । यद्वा सर्वसाधारणो ह्येष गूढग्रन्थिरन्तश्चरश्चेतनावतामनुपप्लवः संसारतन्तुः । वत्से वैदेहि देवि भूतधात्रि समाश्वसिहि समाश्वसिहि ।

**पृथ्वी** । देवि सीतां प्रसूय कथमाश्वसिमि ।

(घ) **सोढश्चिरं राक्षसमध्यवासः**
**त्यागो द्वितीयश्च सुदुःसहोऽस्याः ।**

---

( १ ) । भगवति का त्वमियं च ।

( २ ) भगवति नमस्ते नमस्ते ।

( ३ ) हा अम्ब ईदृश्यहं त्वया दृष्टा ।

---

(क) चारित्र्योपचितां चारित्र्येण पातिव्रत्येन उपचितां वृद्धां । कल्याणानां सम्पदं अतिशयं अधिगच्छ प्राप्नुहि ॥

(ख) अभ्युपपन्ना अनुगृहीता । 'अभ्युपपत्तिरनुग्रहः' इत्यमरः ॥

(ग) गूढग्रन्थिः गूढः अपत्यस्नेहरूपः ग्रन्थिः यस्य सः । संसारतन्तुः संसारजालं । यो हि ग्रन्थिबहुलः तन्तुः स एव जालं तच्च मीनाऽऽदीनां जलचराणां दुरुच्छेदं भवति ॥

(घ) **सोढ इति** । चिरं दीर्घकालं राक्षसमध्यवासः सोढः । अस्याः द्वितीयश्च । चः त्वर्थे । त्यागः सापवादत्वात् सुदुःसहः अत्यन्तं सोढुमशक्यः सुदुःश्रव इति पाठे अत्यन्तदुःखेनापि श्रोतुमशक्यः ।

(क) भागीरथी । को नाम पाकाभिमुखस्य जन्तो-
द्वाराणि दैवस्य पिधातुमीष्टे ॥ ४ ॥

(ख) पृथ्वी । भागीरथि सदृशमुक्तम् । युक्तमेतद्वा रामभद्रस्य ।

(ग) न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निर्नानुवृत्तिर्न सन्ततिः ॥ ५ ॥

सीता । हा अज्जउत्त सुमराविद ह्मि (१)
पृथ्वी । आः कस्तवाऽऽर्यपुत्रः ।
सीता । (सलज्जाऽस्रम्) जहा वा अम्बा भणादि (२)
(घ) रामः । अम्ब पृथ्वि ईदृशोऽस्मि ।
(ङ) भागीरथी । प्रसीद भगवति वसुन्धरे शरीरमसि संसारस्य । तत्किमसंविदानेव जामात्रे कुप्यसि ।

---

(१) हा आर्यपुत्रं स्मारितास्मि ।
(२) यथा वाऽम्बा भणति ।

---

(क) क इति । पाकाभिमुखस्य फलानि दातुं अभिमुखस्य दैवस्य द्वाराणि पिधातुं आच्छादयितुं को नाम ईष्टे समर्थो भवति । न कोपीत्यर्थः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति 'अपेः' अकारलोपः ॥ ४ ॥

(ख) युक्तं वा । इति काकुः । न युक्तमित्यर्थः ॥

(ग) नेति । न प्रमाणीकृतः न विश्वसितः । नाहं । अहं इत्यनेन अयोनिजातत्वेन उत्पत्त्यैव पूतत्वं व्यज्यते । न जनकः । जनक इत्यनेन तत्पालितत्वेन तस्यापवादायोगता ध्वन्यते । नाग्निः । अग्निः इत्यनेन तस्य शुद्धिपरिचायकत्वेन तत्कृतशुद्धौ विश्वसनीयता ध्वन्यते । नानुवृत्तिः । अनुवृत्तिः इत्यनेन तया वनवासे कृतस्य चित्ताऽऽनुकूल्यवर्तनस्य सीताचारित्र्यज्ञानजनकता व्यज्यते । न सन्ततिः । संततिः इत्यनेन इयं मम वंशप्रवर्तिका इत्यपि नावेक्षितं इति व्यज्यते ॥ ५ ॥

(घ) ईदृशः ईदृश्यां त्वय्यपि अपवादाऽऽरोपेण तव त्यागं कुर्वन् क्रूरकर्मा नामग्रहणायोग्यः ॥

(ङ) असंविदाना अजानती । समप्रर्वेभ्यो विदः 'समो गमी'—ति सूत्रपठितेन 'अतिश्रुतिदृशिभ्यश्च' इति वार्तिकेन आत्मनेपदं 'शानच्' । जामात्रे रामाय कुप्यसि । 'क्रुधद्रुह'-त्यादिना सम्प्रदानत्वेन चतुर्थी । प्रजारञ्जनव्रतानुरोधेन सीतात्यागमाचरते रामाय तदजानन्त्यास्ते कोपोऽनुचित इति भावः ॥

(क) घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
लङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तमसि विषमे किं स वत्सः करोतु ॥ ६ ॥

(ख) लक्ष्मणः । अव्याहतान्तःप्रकाशा हि देवता भूतेषु विशेषेण गङ्गा । तथाऽप्येष तेऽञ्जलिः ।

रामः । अम्ब अनुवृत्तस्त्वया भगीरथगृहे प्रसादः ।

(ग) पृथ्वी । देवि नित्यं प्रसन्नाऽस्मि वः । किन्त्वापातदुःसहस्नेहसंवेगेनैवं ब्रवीमि । न पुनर्न जानामि सीतास्नेहं रामभद्रस्य ।

(घ) दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

(ङ) रामः । सकरुणा हि गुरवो गर्भरूपेषु ।

सीता ( रुदती कृताञ्जलिः ) णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा ( १ )

---

( १ ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

---

(क) तदेवाह—**घोरमिति** । विततं विस्तीर्णं । या च या तु । वः त्वर्थे । कथमिव । इवशब्दो वाक्यालङ्कारे । इह अयोध्यायां । ततो लङ्कायाः अतिदूरत्वात् श्रद्धाऽयोग्यता । जनः । इति अतिपामरतां तस्य दर्शयति । श्रद्दधातु विश्वसितु । इदं लोकाऽऽराधनं । कुलधनं धनमिव अवश्यं रक्षणीयं । विषमे तमसि अतिगहने । वत्सः । इत्यनेन रामे दयनीयत्वं व्यज्यते । किं करोतु । सीतात्यागं विना तस्य नान्या गतिरभूदिति भावः ॥ ६ ॥

(ख) अव्याहतान्तःप्रकाशाः । भूतेषु प्राणिषु विषये । देवताः । अव्याहतः अप्रतिबद्धः अन्तःप्रकाशः अन्तःकरणवृत्तीनां परिज्ञानं यासां ताः । विशेषेण गङ्गा । भागीरथी तु सर्वेषां अन्तःकरणवृत्तीः विशेषेण जानातीति भावः । तथाऽपि रामस्य निर्दोषत्वेऽपि ॥

(ग) आपातदुःसहः अविचारेण सोढुं अशक्यः । विचारे तु सोढुमपि शक्यः । अपत्यस्नेहेति पाठस्तु साधीयान् । संवेगेन आवेगेन । पुनः इति न जानामीति न । अपि तु जानाम्येव ॥

(घ) **दह्यमानेनेति** । दह्यमानेन लोकापवादश्रवणात् सन्तप्यमानेन दैवात् अदृष्टवशाद्धेतोः सत्वेन धैर्येण ॥ ७ ॥

(ङ) गर्भरूपेषु अपत्यरूपेषु ॥

**रामः ।** किमन्यद्ब्रवीतु ।

**भागीरथी ।** शान्तम् । अविलीना संवत्सरसहस्रं भूयाः ।

(क) **पृथ्वी ।** वत्से अवेक्षणीयौ न ते पुत्रकौ ।

**सीता ।** अणाध ह्मि किं एदेहिं । ( १ )

**रामः ।** हृदय वज्रमयमसि ।

**भागीरथी ।** कथं त्वं सनाथाप्यनाथा ।

**सीता ।** कीदिसं मम अभग्गाए सणाधत्तणं ( २ )

(ख) **देव्यौ । जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।**
**आवयोरपि यत्संगात् पवित्रत्वं प्रकृष्यते ॥ ८ ॥**

**लक्ष्मणः ।** आर्य श्रूयताम् ।

(ग) **रामः ।** शृणोतु लोकः ।

( नेपथ्ये कलकलः )

**रामः ।** अद्भुततरं किमपि ।

**सीता ।** किं त्ति अन्तरिक्खं पज्जलदि ( ३ )

**देव्यौ ।** ज्ञातम् ।

**कृशाश्वः कौशिको राम इति येषां गुरुक्रमः ।**
**आविर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ ९ ॥**

---

( १ ) अनाथाऽस्मि किमेताभ्याम् ।
( २ ) कीदृशं ममाभाग्यायाः सनाथत्वम् ।
( ३ ) किमित्यन्तरिक्षं प्रज्वलति ।

---

(क) अवेक्षणीयौ पालनीयौ पुत्रकौ न अपि तु अवेक्षणीयौ। अनुकम्पायां 'कन्'। अतः तयोः पालनार्थं त्वं चिरं जीव इत्यर्थः ॥

(ख) **जगदिति ।** आवयोः अपि गङ्गापृथिव्योः पवित्रयोरपि यत्सङ्गात् यत्सम्बन्धात् ॥ ८ ॥

(ग) लोकः शृणोतु । तेनैव अपवादस्य सीतायां आरोपितत्वात् ॥

( नेपथ्ये )

(क) देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः ॥ १० ॥

सीता । दिट्ठिआ अत्थदेअदाओ एदाओ हा अज्जउत्त अज्ज वि दे प्पसादादो प्फुरन्ति ( १ )

लक्ष्मणः । उक्तमासीदार्येण सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्तीति ।

(ख) देव्यौ । नमो वः परमाख्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
अनुध्यातैरुपेतव्यं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

(ग) रामः । क्षुभिताः कामपि दशां कुर्वन्ति मम सांप्रतम् ।
विस्मयाऽऽनन्दसन्दर्भजर्जराः करुणोर्मयः ॥ १२ ॥

देव्यौ । मोदस्व वत्से रामभद्रतुल्याविदानीं ते पुत्रकौ संवृत्तौ ।

सीता । भअवदीओ को एदाणं क्खतिओचिदं कम्म करिस्सदि ( २ )

---

( १ ) दिष्ट्या अस्त्रदेवता एताः हा आर्यपुत्र अद्यापि ते प्रसादात् प्रस्फुरन्ति ।

( २ ) भगवत्यौ क एतयोः क्षत्रियोचितं कर्म करिष्यति ।

---

(क) देवीति । आलेख्यदर्शनात् चित्रदर्शनात् ययोर्दाता पूर्वोक्तेन त्वत्प्रसूतिमुपस्थास्यन्तीति वचनेन ॥ १० ॥

(ख) नम इति । वः युष्माकं । वत्सयोः । इति कर्मणि 'षष्ठी'। वत्सौ प्रति । वः युष्मभ्यम् ॥ ११ ॥

(ग) क्षुभिता इति । विस्मयेति विस्मयस्य आनन्दस्य च सन्दर्भेण ग्रन्थनेन जर्जराः विमिश्राः करुणोर्मयः करुणस्य शोकस्य ऊर्मयः क्षुभिताः क्षोभं प्राप्ताः सन्तः । सांप्रतं अधुना मम कामपि लोकोत्तरां दशां कुर्वन्ति ॥ १२ ॥

(क) **रामः** । **एषा वसिष्ठगुप्तानां रघूणां वंशवर्धिनी ।**
**कष्टं सीताऽपि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥**

**भागीरथी** । पुत्रि किं तवानया चिन्तया । एतौ हि वत्सौ स्तन्यत्यागात् परेण भगवतो वाल्मीकेरर्पयिष्यामि । स एतयोः क्षत्रकृत्यं करिष्यति ।

(ख) **यथा वसिष्ठाऽऽङ्गिरसावृषी प्राचेतसस्तथा ।**
**रघूणां जनकानां च वंशयोरुभयोर्गुरुः ॥ १४ ॥**

**रामः** । सुविचिन्तितं भगवत्या ।

**लक्ष्मणः** । आर्य सत्यं विज्ञापयामि तैस्तैरुपायैर्वत्सौ कुशलवावुत्प्रेक्षे ।

(ग) **एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।**
**आर्यतुल्याऽऽकृती वीरौ वयसा द्वादशाऽऽब्दिकौ ॥१५॥**

(घ) **रामः** । वत्स इत्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि ।

**पृथ्वी** । एहि वत्से पवित्रीकुरु रसातलम् ।

**रामः** । हा प्रिये लोकान्तरं गतासि ।

---

(क) **एषेति** । संस्कर्तारं । 'संस्कृतं भक्षाः' इति ज्ञापकात् 'सुट्' । न विन्दति न लभते कष्टं उभयकुलोन्नतिदायिन्याः पुत्रयोः संस्करणेऽपि संशयः अत एव दुःखम् ॥ १३ ॥

(ख) **यथेति** । वसिष्ठाङ्गिरसौ वसिष्ठशतानन्दौ ॥ १४ ॥

(ग) **एताविति** । द्वादशाऽऽब्दिकौ द्वादश अब्दान् भूतौ जातौ । 'तमधीष्टो भृतो भावी' इति 'ठक्' ॥ १५ ॥

परिप्लवमानहृदयः वत्सौ इत्येव कारणात् परिप्लवमानं चञ्चलं हृदयं यस्य सः । प्रमुग्धः विमूढः अस्मि । इमौ मे वत्सौ न वेति संशयितचित्तोस्मीति ॥

सीता । णेदु मं अत्तणो अङ्गेसुं विलअं अम्बा । ण सक्कह्मि ईदिसं जीअलोअपरिवत्तं अणुभविदुं ( १ )

रामः । किमुत्तरं स्यात् ।

(क) पृथ्वी । स्तन्यत्यागं यावन्मन्नियोगतः पुत्रकयोरवेक्षस्व परेण ते यथा रोचिष्यते ।

(ख) गङ्गा । एवं नाम ।

( ततो निष्क्रान्ता गङ्गापृथ्वीसीताः ) ।

(ग) रामः । कथं विलय एव वैदेह्याः सम्पन्नः । हा देवि दण्डकारण्यवासप्रियसखि हा चारित्रदेवते लोकान्तरं पर्यवस्थिताऽसि । ( इति मुह्यति )

(घ) लक्ष्मणः । भगवन् वाल्मीके परित्रायस्व । एष किं ते काव्यार्थः ।

( नेपथ्ये )

(ङ) अपनीयतामातोद्यकम् । भो भोः सजङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः पश्यत महर्षिणा भगवता वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

---

( १ ) नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न शक्तास्मि ईदृशं जीवलोकपरिवर्तमनुभवितुम् ) ।

---

(क) स्तन्यत्यागं यावत् स्तन्यत्यागपर्यन्तं । 'ततोन्यत्रापि दृश्यते' इति 'द्वितीया' । अवेक्षस्व अवलोकय । पालयेति यावत् । परेण परस्मिन् काले । एनबन्तं अव्ययमेतत् । ते तुभ्यं । रुच्यर्थाना—मिति संप्रदानत्वं । रोचिष्यते । तथा कारिष्यसीति शेषः । स्तन्यत्यागात् परं यथेभिलषितं क्रियतामिति भावः ॥

(ख) एवं नाम एवमेव कर्तव्यं । एतत्करणेन तव श्रेयउदर्को भविष्यतीति भावः ॥

(ग) पर्यवस्थिता प्रस्थिता ॥

(घ) काव्यार्थः काव्यस्य प्रयोजनं अभिधेयं वा ॥

(ङ) आतोद्यकं तताघनद्धसुषिरघनेति चतुर्विधं वाद्यं । अभ्यनुज्ञातं अनुज्ञया सम्पन्नम् ॥

**लक्ष्मणः** । ( विलोक्य )

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ १६ ॥

(पुनर्नेपथ्ये)

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवाऽऽवाभ्यां सीता पुण्यव्रता वधूः ॥ १७ ॥

**लक्ष्मणः** । दिष्टया अहो आश्चर्यमाश्चर्यम् । आर्य पश्य पश्य । ( विलोक्य ) कष्टमद्यापि नोच्छ्वसित्यार्यः ।

( ततः प्रविशत्यरुन्धती सीता च )

(क) **अरुन्धती** । त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं प्रियस्पर्शेन पाणिना ॥ १८ ॥

**सीता** । ( ससंभ्रममुपसृत्य स्पृशन्ती ) समस्ససिदु अज्जउत्तो (१)

**रामः** । ( समाश्वस्य सानन्दम् ) भोः किमेतत् । (दृष्ट्वा सहर्षाद्भुतम्) कथं देवी । ( सलज्जम् ) अये अम्बा मे अरुन्धती सर्वे च प्रहृष्यदृष्यशृङ्ग-शान्तासमेता गुरवः ।

**अरुन्धती** । वत्स एषा भगवती भगीरथगृहदेवता सुप्रसन्ना गङ्गा ।

---

( १ ) ( समाश्वसित्वार्यपुत्रः ) ।

---

(क) **त्वरस्वेति** । शालीनशीलतां अधृष्टस्वभावतां । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातनात् एतत् साधु ॥ १८ ॥

(क) ( नेपथ्ये ) जगत्पते रामचन्द्र स्मर्यतामालेख्यदर्शने मां प्रत्यात्मनो वचनं यथा सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति । तत्रानृणाऽस्मि जाता ।

अरुन्धती । इयं ते श्वश्रूर्भगवती वसुन्धरा ।

(ख) ( पुनर्नेपथ्ये ) उक्तश्च पूर्वमायुष्मता वत्सापरित्यागे यथा भगवति वसुन्धरे श्लाघ्यां दुहितरमवेक्षस्व जानकीमिति । तदधुना कृतवचनाऽस्मि प्रभोर्वत्सस्येति ।

रामः । कथं कृतमहाऽपराधो भगवतीभ्यामनुकम्पितः । प्रणमामि वः ।

(ग) अरुन्धती । भो भोः पौरजानपदाः भगवतीभ्यां जान्हवीवसुन्धराभ्यामेवं प्रशस्यमाना ममारुन्धत्याः समर्पिता । पूर्वश्च भगवता वैश्वानरेण निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः संस्तुता सवितृकुलवधूर्देवयजनसंभवा सीतादेवी परिगृह्यतामिति कथं भवन्तो मन्यन्ते ।

(घ) लक्ष्मणः । एवमार्ययाऽरुन्धत्या निर्भर्त्सिताः प्रजाः कृत्स्नश्च भूतग्राम आर्या नमस्करोति । लोकपालाश्च सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते ।

अरुन्धती । जगत्पते रामचन्द्र ।

(ङ) नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यप्रकृतिमध्वरे ॥ १९ ॥

---

(क) अनृणाऽस्मि । त्वद्वचनकरणेन आनृण्यं मया सम्पादितमिति भावः ॥

(ख) कृतवचना कृतं अनुष्ठितं वचनं यया सा ॥

(ग) सब्रह्मकैः पितामहसहितैः । स्वार्थे 'कन्'। कथं भवन्तो मन्यन्ते । अनुमोदन्ते न वा इति प्रश्नः ॥

(घ) उपतिष्ठन्ते । उपाद्देवपूजे—त्यात्मनेपदं । एतेन सीताया देवतात्वं व्यज्यते ॥

(ङ) नियोजयेति । हिरण्मय्याः सुवर्णनिर्मितायाः । विकारे 'मयट्' टित्वात् 'ङीप्'। दाण्डिनायने—ति सूत्रेण निपातः । प्रतिकृतेः प्रतिमायाः । पुण्यां प्रकृतिं बिम्बभूतां धर्मचारिणीं । सहेति शेषः । यथाधर्मं धर्मानतिक्रमणेन नियोजय । एतया सहितः अश्वमेधं प्रवर्तयेत्यर्थः ॥ १९ ॥

**सीता** । ( स्वगतम् ) जाणादि अज्जउत्तो सीदादुक्खं प्पमज्जिदुं ( १ )

**रामः** । यथा भगवत्यादिशति ।

**लक्ष्मणः** । कृतार्थोस्मि ।

**सीता** । जीविद ह्मि ( २ )

(क) **लक्ष्मणः** । आर्ये एष निर्लज्जो लक्ष्मणः प्रणमति ।

**सीता** । वच्छ ईदिसो वि चिरं जीव ( ३ )

**अरुन्धती** । भगवन् वाल्मीके उपनीयेतामिमौ सीतागर्भसंभूतौ रामभद्रस्य पुत्रकौ कुशलवौ । ( निष्क्रान्ता )

**रामलक्ष्मणौ** । दिष्ट्या तथैव तत ।

**सीता** । ( सबाष्पाऽऽकुला ) कहिं ते पुत्रका मे ( ४ )

( ततः प्रविशति वाल्मीकिः कुशलवौ च )

**वाल्मीकिः** । वत्सौ कुशलवौ एष रघुपतिः पिता युवयोर्लक्ष्मणः कनिष्ठतातः सीतादेवी जननी एष राजर्षिर्जनको मातामहः ।

**सीता** । ( सहर्षकरुणाद्भुतं विलोक्य ) कहं तादो ( ५ )

**कुशलवौ** । हा तात हा अम्ब हा मातामह ।

**रामलक्ष्मणौ** । ( सहर्षमालिङ्ग्य ) ननु वत्सौ पुण्यैः प्राप्तौ स्थः ।

---

( १ ) जानात्यार्यपुत्रः सीतादुःखं प्रमार्जयितुम् ।
( २ ) जीविताऽस्मि ।
( ३ ) वत्स ईदृशोऽपि चिरं जीव ।
( ४ ) कुत्र तौ पुत्रकौ मे ।
( ५ ) कथं तातः ।

---

(क) निलर्ज्जः लज्जारहितः । सीतात्यागात् लज्जात्वं सीतालाभात् तद्राहित्यञ्चेति व्यज्यते ॥

**सीता ।** एहि जाद कुस एहि जाद लव चिरस्स परिस्सजध पुणो जम्मन्तरगदं जणणिं ( १ )

**कुशलवौ ।** ( तथा कृत्वा ) धन्यौ स्वः ।

**सीता ।** भअवं पणमामि ( २ )

(क) **वाल्मीकिः ।** वत्से ईदृश्येव चिरं भूयाः ।

(ख) **सीता ।** अम्महे तादो कुलगुरू अज्जाअणो सभत्तुआ अज्जा सन्तादेई सलक्खणा सुप्पसण्णा अज्जउत्तचलणा समं कुशलवा वि दीसन्ति ता णिब्भर ह्मि आणन्देण ( ३ )

(ग) **वाल्मीकिः ।** ( उत्थायावलोक्य च ) उत्खातलवणो मधुरेश्वरः प्राप्तः ।

(घ) **लक्ष्मणः ।** सानुषङ्गाणि कल्याणानि ।

**रामः ।** सर्वमिदमनुभवन्नपि न प्रत्येमि । यद्वा प्रकृतिरियमभ्युदयानाम् ।

**वाल्मीकिः ।** रामभद्र उच्यतां किं ते भूयः प्रियमुपकरोमि ।

**रामः ।** अतःपरमपि प्रियमस्ति । तथापीदमस्तु ।

---

( १ ) एहि जात कुश एहि जात लव चिरस्य परिष्वजेथां पुनर्जन्मान्तरगतां जननीं ।

( २ ) भगवन् प्रणमामि ।

( ३ ) अम्महे तातः कुलगुरुरार्याजनः सभर्तृकाऽऽर्या शान्तादेवी सलक्ष्मणाः सुप्रसन्ना आर्यपुत्रचरणाः समं कुशलवावपि दृश्यन्ते । तन्निर्भराऽस्म्यानन्देन ।

---

(क) ईदृशी एवं विधसौभाग्यशालिनी पतिपुत्रदेवराऽऽदिसहिता । एतत्समागमस्य काकतालीयवत् अतर्कितोपनतत्वेन सौभाग्यशालित्वम्

(ख) सभर्तृका ऋष्यशृङ्गसहिता । निभरा पूर्णा ॥

(ग) उत्खातलवणः उत्खातः समूलं उन्मीलितः लवणः कुम्भीनसीपुत्रः राक्षसः येन स मधुरेश्वरः । तं हत्वा मधुवने मथुरानाम्नीं नगरीं निर्माय सम्प्राप्तः ॥

(घ) सानुषङ्गाणि सानुबंधीनि । अभ्युदयप्राप्तौ अभ्युदयांतरमितिपरंपरा भवतीतिभावः ॥

(क) पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
वाल्मीकेः परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
225 शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम् ॥२१॥

( इति निष्क्रान्ताः सर्वे )

सम्मेलनं नाम

सप्तमोऽङ्कः ।

---

इति महाकविश्रीभवभूतिविरचितं

उत्तररामचरितं नाम नाटकं

समाप्तम् ।

---

(क) **पाप्मभ्य इति** । मङ्गल्या मङ्गलाय हिता । जगतः मातेव लक्ष्मीरिव । यद्वा जगतः मातेव हितकारिणी । मनोहरा च मनसः आह्लादजनिका । गङ्गेव पाप्मभ्यः पुनातु । श्रेयांसि कल्याणानि वर्धयतु । शब्दब्रह्मविदः वेदतत्वार्थज्ञस्य कवेः क्रान्तदर्शिनः । परिणतप्रज्ञस्य परिणता परिपाकं प्राप्ता प्रज्ञा बुद्धिः यस्य तस्य वाल्मीकेः विन्यस्तरूपां अभिनयैः नाटकाऽऽदिरूपैः विन्यस्तं दर्शितं रूपं यस्याः तां । वाणीं बुधाः परिभावयन्तु आलोचयन्तु परिशीलयन्तु ॥ २१ ॥

**इति भावभूतार्थबोधिकायां सप्तमोऽङ्कः ॥**

---

अहल्यागर्भजातेन श्रीकृष्णतनुजन्मना ॥ कृष्णशिष्येण रचिता जयकृष्णेन धीमता ॥ १ ॥

घाटे इत्युपनाम्नेयं भट्टजीपदलक्ष्मणा ॥ अत्याष्टि १७ नाग ८ कु १ मिते शके १८१७ याम्यायने शुभे ॥ २ ॥

भाद्रेमास्यसिते पक्षे गुर्वष्टम्यां समापिता ॥ भवभूतिसरस्वत्या भावबोधिका ॥ ३ ॥

# THE UTTARA RAMA CHARITA

## ACT I.

*(Enter the Sutradhára reciting the Nándi.)*

NANDI.

After saluting the poets of old we make this prayer: May we obtain the immortal deity of Speech who is only a phase of the Supreme Spirit.

*After the Nándi.*

*Sutradhára*—Enough of prolixity. Today being the festival of the revered Kalapriyanatha (Siva) I request these honourable persons (present): May your honours know this—There, verily, is a (poet) the revered Bhavabhuti, son of Jatukarni (mother), a scion of the family of Kasyapa, bearing the distinctive title of Srikantha and well-versed in the principles of the sciences of grammar, logic and the two Mimamsas. Uttara Rama Charita (the latter part of the life of Rama) composed by him, a Brahmana, whom the goddess of Speech follows like an obedient wife, will now be represented. Here have I become, for the same purpose, a citizen of Ayodhya and a contemporary of (Rama). (*Looking round*) Ho, lo! this being the occasion of the installation festival of his Lordship Rama, comet (destructive to the family of Paulastya (Ravana), when ceaseless joyous music should have been kept up night and day, why is it that the dancing squares are quiet, the actors being inactive?

*Enter Nata.*

*Nata*—Revered Sir, the high-souled monkeys and demons who had assisted (Rama) in the war of Lanka as well as the priestly and the royal sages that had come from various quarters to greet (Rama) have been sent back to their respective homes by our great lord from this place; it was in their honour that there was festival for so many days. The queens (too) the mothers of Rama following Arundhati and having Vasistha as their guide have now gone to the hermitage of their son-in-law to attend a sacrifice.

*Sutradhára*—Being a stranger (to this place) I ask "who on earth could that son-in-law be?"

*Nata*—The king Dasaratha gave birth to a daughter by name Shanta whom he gave in adoption to king Lomapada. Rishyashringa the son of Vibhandaka married her; and he has now commenced a sacrificial session which will last for twelve years. It is out of regard for him that the elderly ladies (queens) have gone thither, leaving their daughter-in-law Janaki, though far advanced in pregnancy.

*Sutradhara*—But oh, what is all this to us? Come on, let us (both) proceed to the royal gate and perform duties befitting our profession.

*Nata*—Then, may your honour propose some appropriate form of

praise wherewith to approach the king.

*Sutradhara*—My good friend, one must do his duty as he thinks best, for, it is impossible to obtain perfect blamelessness. Men are (naturally) inclined maliciously towards the purity of words as of women.

*Nata*—Extremely malicious, we ought to say. For, men speak ill even of the queen Janaki. The root (of all this scandal) is the fact that she (Janaki) lived in the house of the demon. Moreover people entertain doubts as to the fact of her purification by fire.

*Sutradhara*—If this scandal were to reach the ears of the great king, the result would be very painful.

*Nata*—The sages and deities will bring about good every way. (*Walking round*) Friends, where is the king at present? (*listening*). This is what the people say: Janaka, who came (here) through affection to greet (Rama), having spent so many days in festivities, is today gone back to Videha. The queen (Janaki) being moody on that account, the lord of men (Rama) leaves his judgment seat and enters the inner apartment to soothe her.

(*Exeunt both*)

(*Here ends the Prelude.*)

---

(*Then appear Rama and Sita seated.*)

*Rama*—Queen, daughter of the king of Videha, be of good cheer: your honoured father can not surely bear a long separation from us. But the house-hold condition of those who have preserved the sacred fire being beset with difficulties, takes away much of their independence on account of their having to perform their daily religious rites with strict regularity.

*Sita*—I know it, my lord, I know it; but separations from affectionate persons do, nevertheless, cause affliction.

*Rama*—Just so. These worldly affairs are such as pierce right through the vitals of the heart; and it is owing to a strong feeling of disgust for these that persons of contemplative mood, deserting all objects of desire, retire to the quiet of the woods.

(*Enter Kanchuki*)

*Kanchuki*—Friend Rama! (*Interrupting himself in the middle of his speech with a sense of fear.*) My lord!

*Rama*—(with a smile) Friend, the title of Ramabhadra behoves me most when uttered by an attendant of my revered father. Do, therefore, call me as you are wont.

*Kanchuki*—Lord, Astavakra has come from the hermitage of Rishyashringa.

*Sita*—My lord, why then delay?

*Rama*—Then cause him to enter soon.

*Kanchuki*—(*exit*)

(*Enter Astavakra*)

*Astavakra*—May you (both) fare well!

*Rama*—Revered Sir, here I salute you; please take your seat here.

*Sita*—A bow to you; are all the elderly ladies with their son-in-law and the noble Shanta doing well?

*Rama*—Is my brother-in-law, the revered Rishyashringa who is performing the Soma sacrifice, doing well, and the noble Shanta too?

*Sita*—Does she remember us either?

*Astavakra*—(*Sitting down*). Undoubtedly; queen, the revered Vasistha, the spiritual preceptor of your family, sends you this word: The all-sustaining revered goddess Earth gave birth to you; king Janaka, who is equal to Prajapati (the creator), is your father; you are the daughter-in-law, oh, fair one, of those kings of whose family the Sun and myself are the guiding spirits. What else, then, shall we wish of you? Only be a mother of heroes!

*Rama*—We are highly obliged. In the case of ordinary saints, their word follows the event; but in the case of primeval Rishis. the event follows their word.

*Astavakra*—The revered Arundhati, the queen mothers and Shanta have repeatedly enjoined you thus: Whatever be her (Janaki's) longing of pregnancy, you must needs gratify it quickly.

*Rama*—It will be done if she only inform us of it.

*Astavakra*—And this message has been sent to the queen (Janaki) by Rishyashringa, the husband of her sister-in-law: "Child you were not brought here as you were far advanced in pregnancy, and young Ramabhadra too was left there to give you his delightful company. We, therefore, wish to see you long-lived with your lap charged with a son."

*Rama*—(*With a smile of joy and modesty.*) Be it so. Has the revered Vasishtha not sent me any message?

*Astavakra*—Hear: "We are detained (here) by the sacrifice of our son-in-law; you are yet a child and your rule is quite new too. It behoves you to devote yourself to the keeping of your subjects pleased and contented, as the glory arising therefrom is your highest wealth.

*Rama*—As the revered Maitravaruni (Vasistha) says. It won't pain me (the least) to sacrifice affection, compassion as well as happiness and, if need be, Janaki herself for the sake of pleasing my subjects.

*Sita*—And this is why my lord stands highest in the list of kings of the Raghu family!

*Rama*—Who waits there? Let the revered Astavakra have rest.

*Astavakra*—(*Rising and walking round*) Ho, lo! prince Lakshmana has arrived!

(*exit*)

*Enter Lakshmana.*

*Lakshmana*—Victorious be the Lord! My lord, the life of your lordship has been portrayed on this board by that painter according to our instructions. Let your lordship look at it.

*Rama*—Well, dear brother, you know well how to divert the

queen in her moments of dejection. How far, then, does it (my life as portrayed on the board) extend?

*Lakshmana*—As far as the purification of her ladyship by fire.

*Rama*—Peace! For her who has been purified by her very birth, what other purifications are needed? Holy water and fire need no purification from other objects. Queen, sprung as you are from the sacrificial ground, excuse me. This disgrace will last as long as your life. Those, to whom family reputation is wealth, have, unhappily, to humour the world Whatever ignoble words I uttered then were really such as you did not deserve. The natural condition of a fragrant flower is to be placed on the head and not to be trampled under foot.

*Sita*—Be it, my lord, be it. Come on, let us look at the portrait of your life. *(Rising they both walk round.)*

*Lakshmana*—Here is that portrait.

*Sita*—(*Looking minutely*) Who are these closely sitting above and seeming to praise my lord?

*Lakshmana*—These are those weapons with their magical charms which came down to Kausika (Visvamitra) from (his ancestor) the revered Krishashwa and which were presented to your lordship by Vishvamitra on the occasion of killing Tataka.

*Rama*—Salute these celestial weapons, queen. Bramha and other ancient sages having observed austere penance for the sake of religious truth for more than a thousand years discovered these as the luster of their own penance.

*Sita*—A bow to these!

*Rama*—They shall, by all means, go to your sons.

*Sita*—I am highly obliged.

*Lakshmana*—This is the scene at Mithila.

*Sita*—Oh, here is my lord portrayed, with his handsome person, muscular, tender, glossy and blue like a fresh blowing lotus, having his graceful splendour viewed with a steadfast gaze by my father wondering to see the bow of Siva broken down with a careless ease (by my lord) having a face lovely on account of the locks of hair (indicating youth)

*Lakshmana*—Behold, noble lady; here is your father with his family priest Shatananda of the family of Goutama, honouring Vasistha and other relations (of Rama).

*Rama*—This is seen. To whom is the connection between the families of Raghu and Janaka not pleasing, when Kausika (Vishvamitra) himself is the giver and acceptor?

*Sita*—Here are you four brothers just ready for your wedding, the hair-cutting ceremony having been alrea'y performed. How now! I feel as if I were at the same place and on the same occasion!

*Rama*—I feel, oh fair-faced one, this were the same occasion when this your hand, festival incarnate, bearing the lovely nuptial

bracelet, j ined to mine by Goutama, delighted me

*Lakshmana*—Here is the queen; here her ladyship Mandavi (Bharata's wife) and here the daughter-in-law Shrutakirti (Shatrughna's wife).

*Sita*—And brother, who is this other lady?

*Lakshmana*— Aside, *with a bashful smile*) Oh, the queen refers to Urmila! Be it; I shall direct her mind elsewhere. (*Aloud*) Behold this, queen, which is worth looking at. Here is his honour Bhargava.

*Sita*— *With confusion*) I fear.

*Lakshmana*—Behold, queen; this (Bhargava) was by his lordship (Rama)—(*so leaves half-finished*).

*Rama*—(Interrupting) Brother, there is much to be seen yet; show something else.

*Sita*—(*Looking at him with affection and respect*) My lord, this modesty becomes you well!

*Lakshmana*—Here we have arrived at Ayodhya.

*Rama*— *With tears*) I remember, alas, I remember! Gone are those days when my dear father was living and our marriage was fresh and when we were anxiously cared for by our mothers. This Janaki, too, then but a child, bearing a face charming on account of the bud-like teeth and the thin, lovely hair curling down her temples, excited the delight of my mothers by her sweet limbs extremely charming, pure as moonlight and naturally graceful.

*Lakshmana*—This is Manthara.

*Rama*—(*Without reply, taking another direction*) Queen. Janaki! Here is that Ingudi tree in the town of Shringavera where we met our kind friend (Guha) the king of Nishadas.

*Lakshmana*—(*Smiling, to himself*) Oh, my lord has passed over the account of our second mother (Kaikeyi)!

*Sita*—Oh, this is the scene when we knotted our hair.

*Lakshmana*—That holy vow of a hermit which the descendants of Ikshwaku used to take in their old age after entrusting the sovereignty to their sons, did my lord assume in his childhood.

*Sita*—Here is the revered Ganges with her pure and holy waters.

*Rama*—Oh, presiding deity of the Raghu family! a bow to you Oh revered one, it was by the holy touch of your waters that Bhagiratha, regardless of the destruction of his body, having observed penance, brought to life, after a very long time, his great-grand-fathers who were burnt to ashes by the lustre of Kapila's wrath while engaged in digging the earth for the search of the horse on the occasion of the sacrifice of Sagara. Such as you are, oh mother, be a well-wisher of your daughter-in-law Sita as Arundhati is.

*Lakshmana*—This is that Banian tree by name Shyama on the bank of Kalindi on the way of Chitrakuta, which was mentioned to us by Bharadwaja.

*Sita*—Does my lord remember this region?

*Rama*—Oh, how could it be forgotten? Here it was that

you got asleep resting on my bosom your limbs languid like a crushed lotus and graceful, though feeble, and dull on account of the fatigue of journey, and which were shampooed by my close embraces.

*Lakshmana*—Here is the place where we were encountered by Viradha at the entrance of the Vindhya forest.

*Sita*—Enough of this. I will see our entrance into the southern forests where my lord held (over me) with his own hand a palm umbrella to ward off the sun.

*Rama*-Here are those penance groves on the banks of the mountain rivulets the trees in which are resorted to by many a hermit, where saints live in huts as householders cooking handfuls of rice and deeming hospitality as their highest duty.

*Lakshmana*—This is the mountain Prasravana in the Janasthana (forest) whose blackness has been thickened by continually watering clouds and whose caves resound by the noise of the river Godawari surrounded by forests the skirts of which have been thickly blackened and cooled by a very dense collection of trees.

*Rama*—Do you remember, oh beautiful-bodied one, those days which we two passed on the mountain so happily with Lakshmana waiting upon us? Do you also remember the river Godavari with its sweet banks? Do you, again, remember its skirts and our wanderings thereon? Moreover, (do you remember) whilst we two were talking to ourselves at random in a low tone, lying close to each other with our cheeks in close touch and our arms locked up in a close embrace, the night itself passed without our knowing the quarterly chimes (our talk still continuing)?

*Lakshmana*—Here is Shurpanakha in Panchavati.

*Sita*—Alas, my lord, this is our last visit!

*Rama*—Oh, you, afraid of separation, this is but a picture!

*Sita*—Be it what it may; a wicked person does, nevertheless, cause unpleasantness.

*Rama*—Oh! the events at Janasthana seem to me but the occurrences of today!

*Lakshmana*—Then, the wicked demon played the trick of taking the disguise of a golden deer in such a way as to pain me even now though it is wiped off; your lordship's actions in that void Janasthana overpowering your senses moved even the stones to tears and broke the heart of the adamant.

*Sita*—(*With tears, to herself*) My lord, delight to the family of the Raghus, you were, indeed, much pained on my account!

*Lakshmana*—(*Looking feelingly at Rama*). What is this, my lord? This stream of tears flowing like a broken garland of pearls rolls on the ground in scattered drops. And the emotion, though checked, heaving as it does your bosom with its weight, is apparent to others by the throbbing of your lips and nose!

*Rama*—Child, the fire of grief

which was caused by the separation of my beloved, though severe, I was able to sustain at that time with a hope to quench it (by revenge). But the same (fire of grief) being now rekindled in my heart pains me like a wound in the vitals of the heart.

*Sita*—Alas, Alas! I too feel myself void of my beloved owing to the pangs of extreme uneasiness!

*Lakshmana*—(*To himself*) I shall direct her to some other subject. (*Looking at the picture, aloud*) This is the representation of the deeds and valour of the revered father Jatayu, the king of vultures, who lived for one Manvantara.

*Sita*—Alas, father, you carried to the extreme your love towards your children!

*Rama*—Alas, father, descendant of Kashyapa, king of birds, where possibly could a great saint like yourself be born?

*Lakshmana*—This is that part of the Dandaka forest lying to the west of Janasthana known by the name of Chitrakunjawan and inhabited by the demon Danu with a headless body; this is the hermitage of Matanga on the mountain Rishyamuka; this is the saintly woman of the Shabari race by name Shramana; and this the lake called Pampa.

*Sita*—Here, indeed, did my lord weep aloud having given up anger and courage.

*Rama*—Queen, this lake is very pleasant. In this lake did I see, during the intervals between the falling of tear drops and the rising of new ones, regions of earth with blue lotuses mixed with white ones whose broad stalks were trembling being shaken by the wings of Mallikaksha birds giving out a sweet music through joy.

*Lakshmana*—This is revered Hanuman.

*Sita*—This is that high-souled Maruti, the great benefactor, who rescued the living world long plunged into dispair.

*Rama*—Happily, this is that strong-armed one, the gladdener of Anjana, by whose valour we and the worlds were able to attain our objects.

*Sita*—Dear brother, what is the name of this mountain on whose flowering Kadamba trees peacocks are dancing, and where my lord has been represented as having slightly fainted and being supported by you weeping, under a tree—the beauty of whose (Rama's) face has become dim, his majestic grace only remaining.

*Lakshmana*—This is the mountain called Malyawan fragrant with the scent of the Kakubha flowers, on the top of which rests a fresh cloud blue and glossy.

*Rama*—Child, desist, desist from this; I can not bear any more. That same separation from (my beloved) Janaki has again returned to me!

*Lakshmana*—Hereafter are to be seen a host of wonderful exploits, one excelling another, of your lordship and the revered monkeys and demons; but her

